गुरौ सचन्द्रे कर्कस्थे चापगे वा, बुधे रवौ।
तुङ्गगे लग्नभवने जातो राजा न संशयः॥ ४६१॥
गुरौ कर्कगते, लग्ने शनौ मदनगेऽथवा।
सुखे वक्रगते शुक्रे जातो राजा न संशयः॥ ४६२॥
जीवादित्यौ मेषगौ चेद्दशमे भूमिनन्दनः।
बुधशुक्रेन्दवो भाग्ये जातो नरपतिर्भवेत्॥ ४६३॥

**सुधा**—जन्मसमय में पाँच ग्रह यदि उच्चस्थ हों तो जातक सार्वभौम राजा होता है। तीन ग्रहों के भी उच्चस्थ रहने पर जातक राजा होता है। उच्च का गुरु केन्द्रस्थ और शुक्र यदि राज्यस्थानगत हों तो भी जातक राजा होता है। सचन्द्र गुरु कर्क या धनुगत हों और बुध तथा सूर्य भी उच्चस्थ होकर लग्नगत हों तो भी जातक राजा होता है। गुरु कर्क( उच्च )स्थ और शनि लग्न या सप्तम में हो तथा वक्री शुक्र चतुर्थस्थ हों तो भी जातक राजा होता है। गुरु तथा सूर्य मेषस्थ, मंगल राज्यस्थ और बुध, शुक्र तथा चन्द्रमा भाग्यस्थ हों तो भी जातक राजा होता है।

भाग्ये मन्दे मृगे भौमे सुखे जीवज्ञभार्गवे।
दिवाकरकराक्रान्तिहीने जातो नराधिपः॥ ४६४॥
रव्यादयो ग्रहाः सर्वे तुलाजमकरेऽथवा।
कर्के वा जन्मनि यदा राजयोगो बुधैः स्मृतः॥ ४६५॥
उच्चे रवौ मृगे वैरिभावे भौमेऽथ भार्गवे।
कर्मगे सहजे मन्दे जातोऽरिध्वंसको नृपः॥ ४६६॥
कर्मेशो नवमेशेन पञ्चमेशेन वा यदि।
सम्बद्धः प्रबलेन स्यात्तदा राजा न संशयः॥ ४६७॥
खेटाः सर्वे मीनकन्यावृषवृश्चिकसंस्थिताः।
अथवा चापमिथुनकुम्भसिंहगता यदि॥ ४६८॥
जनुःकाले यदि तदा योगः सिंहासनाभिधः।
सिंहासनोद्भवो जातः प्रतापी प्रबलो नृपः॥ ४६९॥

**सुधा**—शनि नवमस्थ, भौम मकरस्थ, बुध, गुरु तथा शुक्र सुखस्थ किन्तु रविकराक्रान्त न हों तो जातक राजा होता है। रव्यादिक सभी ग्रह जन्मकाल में तुला, मेष, मकर अथवा कर्क में हों तो भी पण्डितों ने राजयोग कहा है। रवि मेषस्थ, मंगल षष्ठस्थ होकर और शुक्र राज्यस्थान में तथा शनि तृतीयस्थ हों तो जातक शत्रुध्वंसक राजा होता है। कर्मेश नवमेश अथवा पञ्चमेश के साथ सम्बद्ध हों तो भी जातक राजा होता है। सभी ग्रह मीन, कन्या, वृष, वृश्चिक या धनु, मिथुन, कुम्भ एवं सिंह में जन्मसमय हों तो सिंहासन नाम का योग होता है। सिंहासनोत्पन्न जातक प्रतापी तथा प्रबल राजा होता है।

कन्यामीनधनुर्युग्मकुलीरे यदि जन्मनि ।
रव्यादयो ग्रहाः सर्वे जातो राजारिनाशकः ॥ ४७० ॥
सिंहे रविः शशी कर्के मृगे दिनकरात्मजः ।
मीने जीवो बुधो युग्मे तुलायां भृगुनन्दनः ॥ ४७१ ॥
अजे भूमिसुतो यस्य जन्मकाले हि विद्यते ।
साधारणकुलोत्थोऽपि जातो भूपालभूषणः ॥ ४७२ ॥
धर्मकर्माधिनेतारावन्योन्यभवनोपगौ ।
बलिनौ जन्मनि यदा जातोऽरिध्वंसको नृपः ॥ ४७३ ॥
जायालाभकर्मभावगता हि बलिनः शुभाः ।
कुजो भाग्ये शनिर्लाभे जातस्तर्हि नराधिपः ॥ ४७४ ॥
स्वोच्चे स्वमित्रमेवेन्दौ भाग्यगे, शनिभौमयोः ।
कर्मवित्तगयोर्जातो राजयोगान्वितो भवेत् ॥ ४७५ ॥
लग्नातिरिक्तकेन्द्रस्थे विधौ पूर्णबलान्विते ।
भृगुणा वापि गुरुणा दृष्टे राजा न संशयः ॥ ४७६ ॥

**सुधा**—कन्या, मीन, धनु, मिथुन या कर्क में सभी ग्रह यदि जन्मसमय में हों तो जातक राजा होता है । सिंह में सूर्य, कर्क में चन्द्रमा, मकर में शनि, मीन में गुरु, मिथुन में बुध, तुला में शुक्र तथा मेष में मंगल यदि हों तो साधारण वंशोत्पन्न भी जातक राजश्रेष्ठ होता है । धर्मेश एवं कर्मेश यदि परस्पर भवनस्थ हों अर्थात् धर्मेश कर्मस्थान में और कर्मेश भाग्यस्थान में हों, साथ ही वे प्रबल भी हों तो जातक शत्रु-ध्वंसक राजा होता है । बली सभी शुभग्रह सप्तम, एकादश या दशम स्थानगत हों तथा मंगल भाग्यस्थान में और शनि एकादश में हों तो भी जातक नरेश होता है । स्वोच्चस्थ या मित्रभवनस्थ चन्द्रमा यदि भाग्यगत हों और शनि दशम तथा मंगल दूसरे स्थान में हों तो जातक राजा होता है । पूर्णबली चन्द्रमा लग्नातिरिक्त केन्द्र-स्थान में हों और उन पर गुरु या शुक्र की पूर्ण दृष्टि रहे तो भी जातक राजा होता है ।

एक एव ग्रहः स्वोच्चस्थितो वीर्यान्वितो यदि ।
वर्गोत्तमगतस्तर्हि जातो भवति भूपतिः ॥ ४७७ ॥
जन्मलग्नगते जीवे शशिजे केन्द्रसंस्थिते ।
भाग्याधिपतिसन्दृष्टे जातो राजसमो भवेत् ॥ ४७८ ॥
शनौ केन्द्रेऽथवा कोणे स्वोच्चे मूलत्रिकोणगे ।
लाभेशेन च सन्दृष्टे जातो राजसमो भवेत् ॥ ४७९ ॥
चन्द्रे तनौ सुखे जीवे कर्मगे भृगुनन्दने ।
शनौ स्वोच्चेऽथवा स्वर्क्षे जातो नृपसमो भवेत् ॥ ४८० ॥

लग्नादित्रितये रिष्फदशमैकादशे ग्रहाः ।
तिष्ठेयुः सकलास्तर्हि जातो नृपतिसन्निभः ।। ४८१ ।।
कुम्भोदयस्थे रविजे तुङ्गे ग्रहचतुष्टये ।
मेषलग्ने बुधे स्वोच्चे गुरौ वापि नराधिपः ।। ४८२ ।।

**सुधा**—एक भी बली स्वोच्चस्थ ग्रह यदि वर्गोत्तमस्थ हों तो जातक राजा होता है। जन्मसमय में गुरु यदि लग्नस्थ हों, बुध केन्द्रस्थ हों, साथ ही भाग्येश की उन पर दृष्टि रहे तो जातक राजा के समान होता है। शनि केन्द्र या नवम, पञ्चम या अपने उच्च अथवा मूलत्रिकोणस्थ हों और उन पर लाभेश की दृष्टि रहे तो भी जातक राजा के समान होता है। चन्द्रमा लग्न में, गुरु चतुर्थ में, शुक्र दशम में और शनि अपने उच्च या स्वभवन में हों तो भी जातक राजा के समान होता है। लग्न से आगे तथा पीछे तीन-तीन स्थानों में सभी ग्रह रहें तो भी जातक राजसदृश होता है। कुम्भलग्नस्थ शनि तथा अन्य चार ग्रह स्वोच्चस्थ हों या मेषलग्न में बुध या गुरु स्वोच्चस्थ हों तो भी जातक राजा होता है।

मृगोदयगते भौमे चन्द्रे कर्कगते नृपः ।
भौमार्कज्यैः क्रमान्मेषमृगकुम्भस्थितैरपि ।। ४८३ ।।
उच्चाभिलाषी सविता त्रिकोणस्थस्तथा शशी ।
गुरुणा सहितः कर्के यदि जातो नराधिपः ।। ४८४ ।।
लग्नेशः केन्द्रगः कर्मपतिः पञ्चमगस्तथा ।
भाग्येशो लाभगश्चेत् स्यात्तदा जातो नराधिपः ।। ४८५ ।।

**सुधा**—मकरलग्न में मंगल तथा कर्क में चन्द्रमा हों तो जातक राजा होवे, अथवा मंगल, सूर्य और गुरु क्रमशः मेष, मकर तथा कुम्भ में स्थित हों तो भी जातक राजा होता है। उच्चाभिलाषी सूर्य यदि त्रिकोण में और चन्द्रमा गुरु के साथ कर्क में हों तो जातक राजा होता है। लग्नेश केन्द्र में, कर्मेश पञ्चम में और भाग्येश लाभ-स्थान में हों तो भी जातक राजा होता है।

गुरुणा सहितः शुक्रो वित्तगो यदि जन्मनि ।
वसुधाधिपतिर्जातो जितारातिगणो भुवि ।। ४८६ ।।
अस्तोऽपि रविजः स्वस्थोऽथवा मूलत्रिकोणगः ।
विद्याविशारदं जातं कुरुते नृपतिं ध्रुवम् ।। ४८७ ।।
सुखभावगतौ सूर्यशशिजौ, दशमस्थितौ ।
मन्देन्दू, लाभगो भौमो जातस्तर्हि नराधिपः ।। ४८८ ।।
दशमे पञ्चमे वापि लग्ने शनिकुजौ यदि ।
धनुर्मीनस्थिते पूर्णचन्द्रे, राजा न संशयः ।। ४८९ ।।

लग्नातिरिक्तकेन्द्रस्थे चन्द्रे पूर्णकलान्विते ।
गुरुणा भृगुणा वापि दृष्टे जातो नराधिपः ॥ ४९० ॥
केन्द्रस्थे लग्नपे नीचमूढारातिविवर्जिते ।
अन्यग्रहविहीने च जातो भूमिपतिर्भवेत् ॥ ४९१ ॥

**सुधा**—गुरु-शुक्र यदि जन्मसमय में धनभावगत हों तो जातक शत्रुजेता राजा होता है । अस्तङ्गत भी शनि स्वभवन या अपने मूलत्रिकोण में हों तो जातक विद्वान् राजा होता है । सूर्य-बुध चतुर्थ भाव में, शनि तथा चन्द्र दशम में एवं मंगल लाभ में हों तो निःसन्देह जातक राजा होता है । दशम, पञ्चम या लग्न में शनि, कुज और धनु या मीन में पूर्ण चन्द्र हो तो जातक राजा होता है । लग्नातिरिक्त केन्द्र में स्थित पूर्ण-चन्द्र गुरु या शुक्र से देखे जाँय तो जातक राजा होवे । केन्द्रस्थ लग्नेश नीचराशि या शत्रुक्षेत्र में या अस्त नहीं हो और लग्नेश के साथ अन्य कोई ग्रह भी नहीं रहें तो जातक भूमिपति होता है ।

जन्मनीज्येन्दुरवयः सुतविक्रमधर्मगाः ।
कुबेरसदृशो जातो जायते नात्र संशयः ॥ ४९२ ॥
त्रिषडायगताः पापाः लग्नेशः शुभवीक्षितः ।
तेजस्वी जायते जातो महीपतिसमो भुवि ॥ ४९३ ॥
एकोऽप्युच्चस्थितः खेटो मित्रयुक्तोऽथवेक्षितः ।
जनयेद् वसुधानाथं गुणग्रामसमन्वितम् ॥ ४९४ ॥
धनुर्मीनतुलामेषमृगलग्नगते शनौ ।
चार्वङ्गो जायते जातः पुरग्रामाग्रणीः सदा ॥ ४९५ ॥
कर्मलग्नगते चन्द्रे मीनराशिगते रवौ ।
जनुः काले सति तदा जातो हि वसुधाधिपः ॥ ४९६ ॥

**सुधा**—जन्मसमय में गुरु, चन्द्र तथा सूर्य क्रमशः पञ्चम, तृतीय तथा नवमस्थ हों तो जातक कुबेरसदृश होता है—इसमें सन्देह नहीं । पापग्रह मात्र तीसरे, छठे तथा ग्यारहवें में और लग्नेश शुभग्रह से देखे जाँय तो जातक राजसदृश तेजस्वी होता है । एक भी उच्चस्थ ग्रह अपने मित्र के साथ या मित्र से दृष्ट हों तो गुणसमूहयुक्त राजा को पैदा करते हैं । धनु, मीन, तुला, मेष तथा मकर लग्नस्थ शनि जन्मसमय में हों तो जातक सुन्दर तथा गाँव-नगर में अग्रगामी ( मुख्य = नेता ) होता है । कर्मस्थान या लग्न में चन्द्रमा और मीन राशि में सूर्य हों तो जातक वसुधाधिप होता है ।

लग्नेशे पञ्चमे लग्नगते पञ्चमभावपे ।
कारकावात्मजात्माख्यौ स्वर्क्षे स्वांशे स्वतुङ्गमे ॥ ४९७ ॥
तनौ पञ्चमभावे वा शुभग्रहयुतेक्षिते ।
महाराजाभिधो योगस्तज्जो विश्रुतभूपतिः ॥ ४९८ ॥

भाग्येशः कारकश्चापि लग्ने जायागृहे सुते ।
शुभग्रहेक्षितयुतौ राजयोगकरौ स्मृतौ ॥ ४९९ ॥
लग्नेशात् कारकाद् वापि वित्ते पुत्रेऽथवा सुखे ।
शुभग्रहयुते जातोऽवश्यं हि नृपतिर्भवेत् ॥ ५०० ॥

**सुधा**—लग्नेश पञ्चमस्थ और पञ्चमेश लग्नगत हों, आत्मकारक तथा पुत्रकारक ग्रह अपने भवन, अपने नवांश या अपने उच्चगत हों, लग्न तथा पञ्चम भाव शुभयुक्त या शुभदृष्ट हों तो महाराजसंज्ञक योग होता है। इस योग में उत्पन्न बालक बड़ा ही विख्यात राजा होता है। भाग्येश तथा भाग्यकारक ग्रह लग्न, सप्तम या पञ्चम भावस्थ रहें और दोनों ( भाग्येश तथा भाग्यकारक ) पर शुभग्रह की दृष्टि या संयोग हो तो जातक राजा होता है। लग्नेश या आत्मकारक से दूसरा, पाँचवाँ तथा चौथा भाव शुभग्रहयुक्त या शुभदृष्ट हों तो जातक राजा होता है।

लग्ने धने सुखे सौम्यग्रहयुक्तेऽपि विक्रमे ।
पापग्रहयुते जातो राजा वा तत्समो भवेत् ॥ ५०१ ॥
चन्द्रः शुक्रोऽथवा जीवो बुधो वा प्रबलो भवेत् ।
स्वर्क्षगो धनभावस्थस्तदा जातो नराधिपः ॥ ५०२ ॥
स्वर्क्षतुङ्गस्थितोऽङ्गेशो लग्नं पश्येत्तथा ग्रहाः ।
नीचगा अष्टमे षष्ठे तृतीये वा नराधिपः ॥ ५०३ ॥
त्रिकेशा नीचगा अस्ता अपि वा शत्रुगेहगाः ।
लग्नेशः स्वर्क्षतुङ्गेशो लग्नदर्शी नराधिपः ॥ ५०४ ॥

**सुधा**—लग्न वित्त तथा सुख भाव शुभग्रह युक्त हो और तृतीय भाव पापयुक्त हों तो जातक राजा या राजसदृश होवे। चन्द्रमा, गुरु, शुक्र या बुध अपने भवनस्थ होकर धनभावगत हों तो जातक राजा होता है। लग्नेश अपने गृह या अपने उच्चस्थ होकर लग्न को देखता हो और अन्य ग्रह नीचगत या अष्टम, षष्ठ या तीसरे में हो तो भी जातक राजा होता है। त्रिकेश ( षष्ठाष्टमद्वादशेश ) नीच में हों या अस्त अथवा शत्रुक्षेत्रगत हों तथा अपने गृह या अपने उच्च का लग्नेश लग्न को देखता हो तो भी सुयोग ( राजयोग ) होता है।

प्रसूतिसमये खेटा व्ययायार्थतनुस्थिताः ।
श्रीछत्रयोगोऽस्मिन् जातो धनाढ्यः पुण्यवानपि ॥ ५०५ ॥
स्वर्क्षतुङ्गगकर्मेशो योगकृल्लग्नवीक्षकः ।
केन्द्रगाः सद्ग्रहाश्चापि राजयोगकराः स्मृताः ॥ ५०६ ॥
केन्द्रे शुभग्रहोपेते बुधेज्यभृगुनन्दने- ।
ष्वेकोऽपि स्वोच्चगो राजयोगकृज्जायते नृणाम् ॥ ५०७ ॥

सद्ग्रहैरखिलैः केन्द्रगतैस्त्र्यायारिगैस्तथा ।
असद्ग्रहैस्तर्हि जातो राजा वा तत्समो भवेत् ॥ ५०८ ॥

**सुधा**—जन्मसमय में सभी ग्रह ११, १२, १, २ स्थानों में रहे तो श्रीछत्रयोग होता है। इसमें उत्पन्न बालक धनी तथा पुण्यवान् होता है। स्वभवन या स्वोच्चस्थ कर्मेश यदि लग्न को देखते हो अर्थात् अपने घर या अपने उच्च के कर्मेश की लग्न पर पूर्ण दृष्टि हो और शुभग्रह केन्द्रस्थ हों तो राजयोग होता है। केन्द्र शुभग्रहयुक्त हो और बुध-गुरु-शुक्र में से एक उच्चस्थ हों तो भी राजयोग होता है। सभी शुभग्रह केन्द्रगत और सभी पापग्रह त्रिषडायगत हो तो भी जातक राजा या राजसदृश होता है।

लग्नेशो नवमे यस्य कर्मेशो लग्नगस्तथा ।
स प्रतापी नरपतिर्विख्यातोऽरिविनाशकः ॥ ५०९ ॥
राज्येशः केन्द्रकोणस्थोऽथवा धनगतो बली ।
जन्मकाले भवेद्यस्य स राजा काव्यशास्त्रवित् ॥ ५१० ॥
कर्मेशः सशुभः पुत्रभवने, पञ्चमाधिपः ।
कोदण्डे जनने यस्य नरेशः सोऽरिघातकः ॥ ५११ ॥
जनुः काले गुरुर्यस्य यानं मानेऽपि सप्तमे ।
स्वतुङ्गे च विधौ तत्र जातो दाता गुणी स्मृतः ॥ ५१२ ॥
योगेष्वेतेषु जातो हि नीचवंशगतोऽपि वै ।
जायते नृपती राजकुलजो वक्ष्यमाणतः ॥ ५१३ ॥

**सुधा**—लग्नेश नवम में और कर्मेश लग्न में हों तो जातक प्रतापी, शत्रुनाशक तथा विख्यात राजा होता है। बली राज्येश केन्द्र या कोणस्थ हों या धनभावगत हों तो जातक काव्यशास्त्रज्ञ राजा होवे। शुभग्रहयुक्त कर्मेश पञ्चम में और पञ्चमेश धनु में हों तो जातक शत्रुघ्न राजा होता है। जन्मकाल में यदि गुरु चतुर्थ, दशम या सप्तम में और चन्द्रमा अपने उच्च में रहें तो जातक गुणवान् राजा होता है।

उपर्युक्त योगों में नीचवंशोत्पन्न भी जातक राजा या राजसदृश होता है। राजवंशोद्भव जातक वक्ष्यमाण योगानुसार राजयोग युक्त होता है।

### राजवंशीयानां कृते राजयोगाः

मृगे लग्ने शनौ चन्द्रयुते सूर्ये कुलीरगे ।
आये कुजेऽष्टमे शुक्रे राजवंशोद्भवो नृपः ॥ ५१४ ॥
कवीज्यौ तुर्यगौ, वापि जीवश्चन्द्रसमन्वितः ।
कर्मगो योगयुग्मेऽपि राजा राजकुलोद्भवः ॥ ५१५ ॥
जीवो वीक्षेत शशिनं पञ्चमे वा बली शुभः ।
जन्मकाले यदि, तदा नृपालो नृपबालकः ॥ ५१६ ॥

प्रबलो लग्नपो लग्नगतः केन्द्रगतोऽपि वा ।
राजवंशोद्भवं बालं नृपालं कुरुते ध्रुवम् ।। ५१७ ।।
मेषे रविः शशाङ्केन बलिना संयुतो यदि ।
राजवंशोद्भवो बालो नृपालः कीर्तिसंयुतः ।। ५१८ ।।

**सुधा**—मकर लग्न में शनि-चन्द्रमा का संयोग हो, सूर्य कर्क में, मंगल एकादश में तथा शुक्र अष्टम में हों तो राजवंशोत्पन्न जातक राजा होता है। गुरु-शुक्र चतुर्थ में या सचन्द्र गुरु कर्मस्थ हों तो दोनों स्थिति में राजवंशोत्थ जातक राजा होता है। जन्मकाल में गुरु की दृष्टि चन्द्रमा पर हो या बली शुभग्रह पञ्चमस्थ हों तो राजवंशोत्पन्न बालक राजा होता है। प्रबल लग्नेश लग्नगत या केन्द्रगत हों तो भी राजवंशोद्भव जातक राजा होता है। मेष में रवि, बली चन्द्रमा के साथ रहें तो भी राजकुलोत्पन्न जातक यशस्वी राजा होता है।

कवीज्यौ तुङ्गगौ केन्द्रकोणगौ यदि जन्मनि ।
राजवंशोद्भवो जातो नृपो द्रविणपो भवेत् ।। ५१९ ।।
नीचेतरगतो जीवो लग्नगो नृपवंशजम् ।
पूर्णचन्द्रोऽपि केन्द्रस्थो नृपालं कुरुते नरम् ।। ५२० ।।
कर्मेशः पञ्चमे वाजिगजसौख्यकरो नृणाम् ।
सर्वतोऽस्यातुला कीर्तिलता हि वितता भवेत् ।। ५२१ ।।
चन्द्राद् दशमभावेशः केन्द्रकोणद्विसंस्थितः ।
जन्मकाले यदि तदा जातो मणिगणान्वितः ।। ५२२ ।।
चन्द्राधिष्ठितराशीशः सुखालयगतो यदि ।
मुक्तामणिस्वर्णपुत्रपुण्ययुक्तो नरो भवेत् ।। ५२३ ।।
लग्ने सुखे वा दशमे समन्दश्चन्द्रमा भवेत् ।
जातो नृपकुले राजा तत्समो वा धनान्वितः ।। ५२४ ।।

**सुधा**—जन्मसमय में गुरु-शुक्र अपने उच्चस्थ होकर केन्द्र या कोणगत हों तो राजवंशोत्पन्न जातक द्रव्येश राजा होता है। नीचातिरिक्त स्थानस्थ गुरु यदि लग्नगत हों, पूर्णचन्द्र भी केन्द्रगत हों तो राजवंशोद्भव जातक राजा होता है। कर्मेश यदि पञ्चमस्थ हों तो जातक को हाथी, घोड़ा आदि का सुख मिलता है। उसका यश सभी जगह फैलता रहता है। चन्द्रमा से दशम भावस्वामी केन्द्र, कोण अथवा दूसरे स्थान में रहें तो जातक मणिगणों से युक्त होता है। चन्द्राधिष्ठित राशिस्वामी यदि चौथे स्थान में रहे तो जातक मुक्तामणि, सुवर्ण आदि रत्नों से परिपूर्ण होता है। लग्न, चौथे या दशमे स्थान में शनि तथा चन्द्रमा रहें तो राजवंशोत्पन्न जातक राजा होता है।

### अन्ये विविधयोगाः

### तत्र सफलो गजकेसरीयोगः

चन्द्राल्लग्नाच्च केन्द्रस्थे गुरौ सौम्यैर्युतेक्षिते ।
नीचास्तरिपुभिन्नस्थे योगो वै गजकेसरी ।।
तज्जो धनी गुणी राजप्रियो मेधायुतो नरः ।। ५२५ ।।

**सुधा**—चन्द्रमा से या लग्न से केन्द्रस्थ गुरु शत्रुक्षेत्र तथा नीच राशि से अन्यत्र स्थित अस्तङ्गत नहीं हों तो गजकेसरी योग होता है। इस योग में उत्पन्न जातक धनी, गुणी, राजप्रिय तथा मेधावी होता है।

### सफलः पार्वतयोगः

षष्ठाष्टमे सौम्ययुक्तेऽथवा ग्रहविवर्जिते ।
केन्द्रेषु शुभयुक्तेषु योगः पार्वत ईरितः ।। ५२६ ।।
तज्जो भाग्ययुतो दानी कामी वक्ता विनोदकृत् ।
शास्त्रज्ञः पुरनेता च तेजः कीर्त्तियुतो नरः ।। ५२७ ।।

**सुधा**—लग्न से छठा तथा आठवाँ स्थान शुभग्रहयुक्त हों या ग्रहरहित हो, केन्द्र में शुभग्रह हों तो पार्वत योग होता है। इस योग में उत्पन्न जातक सौभाग्ययुक्त, दानी, कामी, वक्ता, विनोदी, शास्त्रज्ञ, ग्रामनायक, तेजस्वी तथा कीर्त्तियुक्त होता है।

### सफलश्चामरयोगः

लग्नेशे स्वोच्चगे केन्द्रे चामरो गुरुवीक्षिते ।
सौम्यद्वयान्विते व्योम्नि भाग्ये लग्नेऽथवा मदे ।। ५२८ ।।
तज्जो भूपोऽथवा भूपवन्द्यो वक्ता कलाधरः ।
दीर्घायुर्विबुधो जातो जायते नात्र संशयः ।। ५२९ ।।

**सुधा**—लग्नेश स्वोच्चस्थ होकर केन्द्र में गुरुदृष्ट हों अथवा शुभग्रहद्वययुक्त लग्नेश दशम, नवम लग्न या सप्तम में हों तो चामरयोग होता है। चामरयोगोत्पन्न जातक राजा या राजवन्द्य, वक्ता, कलापूर्ण, दीर्घायु तथा विद्वान् होता है, इसमें सन्देह नहीं।

### सफलः शङ्खयोगः

परस्परं केन्द्रगौ चेच्छत्रुपञ्चमभावपौ ।
लग्नेशः सबलः किं वा चरे कर्माङ्गपे तथा ।। ५३० ।।
भाग्येशे प्रबले, शङ्खः तज्जः पुत्रकलत्रवान् ।
दयालुः सुकृती विद्वान् दीर्घायुश्च प्रजायते ।। ५३१ ।।

**सुधा**—( १ ) लग्नेश प्रबल और षष्ठेश एवं पञ्चमेश केन्द्रस्थ हों तो शङ्खयोग;

( २ ) अथवा दशमेश एवं लग्नेश चरराशिस्थ हों और भाग्येश प्रबल हों तो शङ्ख-योग होता है । इन दोनों प्रकार के शङ्खयोगों में उत्पन्न जातक स्त्रीपुत्रयुक्त, दयालु, पुण्यवान्, विद्वान् तथा दीर्घायु होता है ।

**सफलो भेरीयोगः**

लग्नान्त्यधनजायास्थैः खेटैर्बलिनि धर्मपे ।
भेरी, वा प्रबले तत्र केन्द्रेऽङ्गेशेज्यभार्गवैः ।। ५३२ ।।
तज्जो नरपतिः पुत्रदारार्थस्वच्छकीर्त्तिमान् ।
सद्वृत्तः सद्गुणोपेतः सर्वसौख्ययुतो भवेत् ।। ५३३ ।।

**सुधा**—सभी ग्रह लग्न द्वादश, द्वितीय या सप्तम में स्थित हों तथा बली भाग्येश रहें तो भेरीयोग अथवा प्रबल भाग्येश रहे और लग्नेश, गुरु तथा शुक्र केन्द्रस्थ हों तो भी भेरीयोग होता है । भेरीयोगोत्पन्न जातक स्त्री-पुत्र, धन, शुभ्रयश, सद्गुणयुक्त एवं सर्वविध सौख्यसम्पन्न राजा होता है ।

**सफलो मत्स्ययोगः**

पापे धर्मगते पुत्रे शुभाशुभसमन्विते ।
तुर्ये वा रन्ध्रगे पापे मत्स्ययोग उदीरितः ।। ५३४ ।।
तज्जो दयालुर्गुणवान् विद्वान् बुद्धिबलान्वितः ।
यशस्वी रूपवान् कालवेत्ता सत्तापसो भवेत् ।। ५३५ ।।

**सुधा**—भाग्यस्थान में पापग्रह और पञ्चम में शुभ तथा पाप दोनों और चतुर्थ तथा अष्टम में पापग्रह हों तो मत्स्ययोग होता है । मत्स्ययोगोत्पन्न जातक दयालु, गुणवान्, विद्वान्, बुद्धिमान्, यशस्वी, सुरूप, कालज्ञ तथा तपस्वी होता है ।

**सफलो मृदङ्गादियोगः**

लग्नेशे प्रबले खेटाः स्वर्क्षोच्चे केन्द्रकोणगाः ।
मृदङ्गस्तत्र जातस्तु राजा वा राजसन्निभः ।। ५३६ ।।
उच्चस्थे सप्तमेशे तु व्योमगे धर्मकर्मणोः ।
स्वामिनोः संयुतौ जातो राजा श्रीनाथयोगजः ।। ५३७ ।।
कर्मेशे सुतगे केन्द्रे विदीने प्रबले स्वभे ।
चन्द्राद् विदिज्ये कोणे वा भवेद् भौमे तु शारदः ।। ५३८ ।।
शारदोत्थो भवेज्जातो राजमान्यो बुधः सुखी ।
दारातनयवित्ताढ्यः तपोधर्मसमन्वितः ।। ५३९ ।।

**सुधा**—लग्नेश प्रबल और अन्य ग्रह अपने भवन या अपने उच्चस्थ होकर केन्द्र या कोण ( ९।५ ) में हों तो मृदङ्गयोग होता है । मृदङ्गयोगोत्पन्न जातक राजा या राजसदृश होता है । उच्चस्थ सप्तमेश दशम में हों और धर्मेश-कर्मेश का संयोग रहे तो

श्रीनाथयोगज राजा होता है। अर्थात् उपर्युक्त स्थिति में श्रीनाथयोग होता है और श्रीनाथयोगज जातक राजा या राजसदृश होवे। दशमेश पञ्चम भवन या केन्द्र में हों, प्रबल बुध-सूर्य स्वभवनस्थ हों या चन्द्रमा से नवम, पञ्चम में बुध-गुरु और एकादश में मंगल हों तो शारद योग होता है। शारदयोगोत्पन्न जातक राजपूज्य, सुखी, स्त्री-पुत्रसौख्यसम्पन्न, धनी तथा धर्मशील होता है।

**सफलः खड्गयोगः**

लग्नेशे केन्द्रकोणस्थे धनेशे भाग्यभावगे।
भाग्येशे धनगे खड्गयोगो विद्भिरुदीरितः ॥ ५४० ॥
तज्जो जातो भवेद् बुद्धिवीर्यसम्पत्तिसौख्यवान्।
शास्त्रज्ञः कुशलः कृत्ये कृतज्ञश्च विशेषतः ॥ ५४१ ॥

**सुधा**—लग्नेश केन्द्र या कोण ( ९।५ )स्थ हों, धनेश भाग्यस्थान में और भाग्येश धनस्थान में हों तो खड्गयोग होता है। खड्गयोगज जातक बुद्धिबलसम्पत्तिसम्पन्न, शास्त्रज्ञ, कार्यकुशल तथा कृतज्ञ होता है।

**सफलो लक्ष्मीयोगः**

लग्नेशे प्रबले भाग्यनाथे स्वर्क्षोच्चगेऽथवा।
मूलत्रिकोणगे केन्द्रे लक्ष्मीयोगो बुधैः स्मृतः ॥ ५४२ ॥
लक्ष्मीयोगोद्भवो जातो रूपवान् धनवान् गुणी।
कीर्त्तिधर्मयुतो भूपोऽनेकपुत्रान्वितो भवेत् ॥ ५४३ ॥

**सुधा**—लग्नेश प्रबल हो, भाग्येश स्वभवन या स्वोच्चस्थ अथवा मूलत्रिकोणग होकर केन्द्रस्थ हों तो लक्ष्मीयोग होता है। इस योग में उत्पन्न जातक सुरूप, धनी, गुणी, यशस्वी, धर्मिष्ठ तथा अनेक पुत्रों से परिपूर्ण होता है।

**सफलः कुसुमयोगः**

स्थिरे तनौ भृगौ केन्द्रे सशुभे कोणगे विधौ।
कर्मस्थे सूर्यपुत्रे तु योगः कुसुमसंज्ञकः ॥ ५४४ ॥
योगेऽस्मिन् जायमानस्तु राजा वा तत्समो भवेत्।
वदान्यो गुणभोगाढ्यो निजवंशेऽतिविश्रुतः ॥ ५४५ ॥

**सुधा**—स्थिर लग्न हो, शुभग्रहयुक्त शुक्र केन्द्र में या शुभयुक्त चन्द्रमा नवम-पञ्चम में और राज्यस्थान में शनि हों तो जातक राजा या राजा के समान विद्वान्, गुणी, भोगेन्द्र तथा अपने वंश में विख्यात होता है।

**सफलः कलानिधियोगः**

पञ्चमे वा धने जीवे भृगुज्ञसहितेक्षिते।
क्षेत्रे तयोर्वा सम्प्राप्ते योगः प्रोक्तः कलानिधिः ॥ ५४६ ॥

कलानिधिसमुत्पन्नो राजमान्यो गुणी सुखी ।
निर्भयो नीरुजः कामी विद्यार्थपरिपूरितः ॥ ५४७ ॥

**सुधा**—पञ्चम या धनभावगत गुरु बुध-शुक्र से युक्त या बुध-शुक्र से दृष्ट हो या उन दोनों के क्षेत्र ( वृष, मिथुन, कन्या, तुला ) में हों तो कलानिधियोग होता है। कलानिधियोगोत्पन्न बालक राजमान्य, गुणवान्, सुखी, निर्भय, नीरोग, कामी, विद्या तथा धन से परिपूर्ण होता है।

### सफलो लग्नाधियोगः

कामरन्ध्रगतैः सौम्यैः पापदृग्युतिवर्जितैः ।
लग्नाधियोगस्तज्जस्तु सुधी सौख्ययुतो भवेत् ॥ ५४८ ॥

**सुधा**—सभी शुभग्रह सप्तम या अष्टम भवनस्थ हों, वे पापग्रहों के योग या दृष्टि से रहित हों तो लग्नाधियोग होता है। इस योग में उत्पन्न जातक विद्वान् तथा सुखी होता है।

### सफलाः सुनफाऽनफादुरुधरा योगाः

चन्द्राद् वित्तरिष्फसंस्थैर्ग्रहैः सूर्यातिरिक्तकैः ।
सुनफा चानफा योगः क्रमाद् विबुधसम्मतः ॥ ५४९ ॥
वित्तरिष्फोभयस्थैस्तु योगो दुरुधराभिधः ।
सुनफायोगजो जातो राजा वा राजसन्निभः ॥ ५५० ॥
स्वबाहुबलवित्ताढ्यः प्रसिद्धो मतिमानपि ।
अनफासम्भवो भूपो नीरोगः सुभगः सुखी ॥ ५५१ ॥
यशस्वी शीलवान् नानाविधसौख्यसमन्वितः ।
जितारिर्दानशीलश्च वित्तवाहनसौख्ययुक् ॥ ५५२ ॥
सदाऽसौ भाग्यवान् जातो भवेद् दुरुधरोद्भवः ।

**सुधा**—चन्द्रमा से दूसरे स्थान में सूर्यातिरिक्त ग्रहों के रहने पर सुनफा योग और बारहवें स्थान में सूर्यातिरिक्त ग्रहों के रहने से अनफा योग होता है।

सुनफायोगोत्पन्न जातक राजा या राजा के समान अपने भुजबलोपार्जित धनयुक्त तथा बुद्धिमान् होता है। अनफायोगज जातक भी राजा, नीरोग, सुन्दर, सुखी, यशस्वी, सुशील तथा अनेकविध सौख्यों से परिपूर्ण होता है।

दुरुधरायोगोत्पन्न जातक शत्रुजेता, दानशील, धनाढ्य, वाहनयुक्त, सुखी तथा भाग्यवान् होता है।

### सफलः केमद्रुमयोगः

रविं विना शशाङ्कश्चेत् वित्ते रिष्फे तथा तनोः ॥ ५५३ ॥
केन्द्रेऽपि च ग्रहाभावे योगः केमद्रुमाभिधः ।
केमद्रुमोद्भवो जातो निःस्वो विद्याविहीनितः ॥ ५५४ ॥
विविधापत्तिसंयुक्तो निन्दितो दुर्मतिश्च सः ।

सुधा—चन्द्रमा से दूसरे तथा बारहवें स्थानों में तथा लग्न से केन्द्र ( १।४।७।१० ) स्थानों में सूर्य से अतिरिक्त ग्रहों का अभाव हो तो केमद्रुमयोग होता है। केमद्रुमोत्पन्न जातक मूर्ख, दरिद्र, दुर्बुद्धि तथा सर्वथा निन्दित होता है।

### केमद्रुमभङ्गयोगः

चन्द्रे भृगौ वा केन्द्रस्थे जीवदृष्टेऽथवाऽशुभे ॥ ५५५ ॥
ग्रहमध्यगतेन्दौ तु जीवदृष्टे शुभान्विते ।
अतिमित्रनिजोच्चस्वगृहे वा स्वनवांशके ॥ ५५६ ॥
चन्द्रे तनौ वा सशुभे तुङ्गगेन्दौ दिवि स्थिते ।
सर्वत्र गुरुणा दृष्टे भङ्गः केमद्रुमो भवेत् ॥ ५५७ ॥

सुधा—१. चन्द्रमा या शुक्र केन्द्रस्थ होकर गुरु से दृष्ट हों, २. अशुभद्वयमध्यगत चन्द्र शुभयुक्त एवं गुरु दृष्ट हों, ३. अतिमित्र स्वोच्च या स्वभवन या स्वनवांशस्थ चन्द्र गुरुदृष्ट हों तथा ४. शुभग्रहयुक्त लग्न हो और वृष का चन्द्रमा दशमस्थ होकर गुरुदृष्ट हों तो केमद्रुमयोग का भङ्ग हो जाता है अर्थात् केमद्रुमयोगज फल जातक को नहीं होता है।

### राजयोगभङ्गकरा योगाः

भाग्यलाभकर्मनाथाः स्वस्वनीचगृहोपगाः ।
अथवा विकला राजयोगभङ्गकरा स्मृताः ॥ ५५८ ॥
राजयोगकराः खेटाः शत्रुक्षेत्रगता अपि ।
दिवाकरकरैरस्ता राजयोगविनाशकाः ॥ ५५९ ॥
जन्मभं जन्मलग्नं च ग्रहदृष्टिविवर्जितम् ।
जनुः काले यदि भवेद्रङ्को नृपकुलोद्भवः ॥ ५६० ॥
चन्द्रः परमनीचस्थो यदि जन्मनि जायते ।
राजयोगफलं तस्य निश्चितं विफलं भवेत् ॥ ५६१ ॥

सुधा—भाग्येश, लाभेश एवं राज्येश सभी अपने-अपने नीचराशिस्थ हों तो राजयोग का भङ्ग हो जाता है। राजयोगकारक ग्रह यदि शत्रुक्षेत्रगत अथवा सूर्य-सान्निध्यवशात् अस्त हों तो भी राजयोग नष्ट हो जाता है। जन्मराशि तथा जन्मलग्न दोनों पर यदि किसी ग्रह की दृष्टि नहीं हों तो भी राजयोग विनष्ट हो जाता है, प्रत्युत राजकुलोत्पन्न भी जातक रङ्क हो जाता है। चन्द्रमा यदि परमनीच ( वृश्चिक के ३ अंश ) पर हों तो भी राजयोगज फल जातक को नहीं होता है।

राजयोगा, नाभसाख्या अन्येऽपि बहुसंख्यकाः ।
कूटच्छत्रादिका योगा ग्रन्थेषु कथिता बुधैः ॥ ५६२ ॥
समेषां समुपादानमत्र विस्तृतिभीतितः ।
न कृतं केवलं तेभ्यो मुख्या एवात्र वर्णिताः ॥ ५६३ ॥

महापुरुषनाम्ना तु योगाः पञ्चातिविश्रुताः ।
जातकेषु तु सर्वेषु तस्मात्तान् विवृणोम्यहम् ।। ५६४ ।।

**सुधा**—विविध जातक-ग्रन्थों में अनेक राजयोग, नाभसयोग, कूट, छत्र आदिक योग विद्वानों के द्वारा वर्णित है । सभी योगों का उपादान विस्तार भय से इसमें नहीं किया गया है । यहाँ तो केवल मुख्य योगों का ही वर्णन मैंने किया है ।

पञ्चमहापुरुष योग तथा उसका फल सभी मुख्य जातक-ग्रन्थों में वर्णित है, अतः उन्हें भी मैं यहाँ दे रहा हूँ ।

**पञ्चमहापुरुषयोगास्तेषु सफलो रुचकयोगः**

स्वर्क्षतुङ्गस्थितो भौमोऽथवा मूलत्रिकोणगः ।
प्रबलः केन्द्रगस्तर्हि योगो रुचकसंज्ञकः ।। ५६५ ।।
तज्जो बलान्वितवपुः कीर्त्तिशीलसमन्वितः ।
लोहितः श्यामलः सुभ्रूर्जितारिर्धनवान् सुखी ।। ५६६ ।।
राजा वा राजसदृशः सप्तत्यब्दमितावधि ।
प्रशास्ति पृथिवीमन्ते दिवं याति मुदान्वितः ।। ५६७ ।।

**सुधा**—स्वभवन या स्वोच्च या अपने मूलत्रिकोणस्थ भौम यदि केन्द्रगत हों तो रुचकसंज्ञक योग होता है । रुचकयोगोत्पन्न जातक प्रबल शरीरवान्, यश तथा शीलवान्, सुन्दर भौंहों वाला, शत्रुजेता, धनी, सुखी राजा होता है या राजा के समान होता है । वह सत्तर वर्षों तक शासन करने के बाद दिवंगत होता है ।

**सफलो भद्रयोगः**

स्वर्क्षतुङ्गस्थिते सौम्येऽथवा मूलत्रिकोणगे ।
प्रबले केन्द्रगे भद्रसंज्ञो योगः प्रकीर्त्तितः ।। ५६८ ।।
जातो भद्रोद्भवो मानी शार्दूलप्रतिमाननः ।
प्रज्ञावित्तयशोयुक्तो नित्यं बन्धूपकारकः ।। ५६९ ।।
अशीतिमितवर्षायुर्भूपो वा भूपसन्निभः ।

**सुधा**—स्वभवन, स्वोच्च या मूलत्रिकोणस्थ बुध यदि केन्द्रगत हों तो भद्रसंज्ञक योग होता है । भद्रसंज्ञक योग में उत्पन्न जातक मानी, सिंहतुल्य आनन वाला, बुद्धि, वित्त तथा यशो युक्त, सदैव बन्धु-बान्धवों का उपकार करने वाला, अस्सी वर्षों तक जीवित रहने वाला राजा या राजसदृश महापुरुष होता है ।

**सफलो हंसयोगः**

स्वर्क्षतुङ्गस्थिते जीवेऽथवा मूलत्रिकोणगे ।। ५७० ।।
प्रबले केन्द्रगे हंससंज्ञो योग उदीरितः ।
हंसोद्भवो बुधो हंसस्वनो गौरोऽतिसुन्दरः ।। ५७१ ।।

कामी सुवृत्तमूर्धा च भूपो गाङ्गेयदेशपः ।
शताब्दायुरसन्तुष्टः स्त्रीषु केलिसमन्वितः ।। ५७२ ।।

**सुधा**—स्वर्क्ष ( स्वभवन ), स्वोच्च या अपने मूलत्रिकोणस्थित प्रबल गुरु केन्द्रगत हों तो हंससंज्ञक योग होता है । हंसयोगोत्पन्न जातक हंसतुल्य आवाज वाला, गौराङ्ग, अतिसुन्दर, कामी, गोल मस्तक वाला गाङ्गेय प्रदेश का राजा, अनेक स्त्रियों के साथ क्रीडा करने वाला, असन्तुष्ट तथा शतायु होता है ।

**सफलो मालव्ययोगः**

स्वर्क्षतुङ्गस्थिते शुक्रेऽथवा मूलत्रिकोणगे ।
प्रबले केन्द्रगे योगो मालव्याख्यो बुधैः स्मृतः ।। ५७३ ।।
मालव्ययोगजो जातश्चन्द्रकान्तिसमप्रभः ।
स्त्रीचेष्टो ललिताङ्गश्च सुतदारधनान्वितः ।। ५७४ ।।
तेजस्वी शास्त्रवित् शक्तिसम्पन्नश्चारुलोचनः ।
सप्तसप्ततिवर्षाणि यावत् शास्ति महीं मुदा ।। ५७५ ।।

**सुधा**—स्वभवन, स्वोच्च अथवा स्वमूलत्रिकोणगत प्रबल शुक्र केन्द्रगत हों तो मालव्य योग होता है । मालव्ययोगोत्पन्न जातक चन्द्रतुल्य कान्ति वाला, स्त्री की तरह चेष्टावान्, सुन्दर अङ्ग वाला, स्त्री-पुत्र-धन से परिपूर्ण, तेजस्वी, शास्त्रज्ञ, प्रेम-शक्तिसम्पन्न एवं शोभनाक्ष होता हुआ सतहत्तर वर्ष तक पृथ्वी पर शासन करता है ।

**स्त्रीजातकाध्यायः**

लग्नेन्दुवशतो यद्यत्फलमुक्तं महर्षिभिः ।
कन्यकानां तदेवात्र मयाऽपि प्रतिपाद्यते ।। ५७६ ।।
लग्नेन्दुभ्यां तु शारीरं सौभाग्यं सप्तमादपि ।
वैधव्यं निधनस्थानात् पुत्रं पुत्राद् विचिन्तयेत् ।। ५७७ ।।
सप्तमे शुभखेटाभ्यां दृष्टे युक्तेऽपि भूपतः ।
जाया, सौम्यैकतो ज्ञेया प्रिया पत्युस्तथा मदे ।। ५७८ ।।
पापैकतो लोलनेत्राऽधमापापद्वयेन वै ।
पापत्रयेण सा हत्वा पतिं परकुलं व्रजेत् ।। ५७९ ।।
जनुः काले सप्तमस्थे रवौ त्यजति सा पतिम् ।
विधवा भूमितनये शनौ शीघ्रं जरातुरा ।। ५८० ।।

**सुधा**—लग्न तथा चन्द्रमा द्वारा कन्यकाओं के लिए जो-जो फल महर्षियों ने कहे हैं, मैं भी उन्हीं फलों को कहता हूँ । लग्न-चन्द्रमा पर से शरीर-सौख्यादिक का विचार, सप्तमभाव से सौभाग्य का विचार, अष्टम से वैधव्य का विचार एवं पञ्चम से पुत्र का विचार करना चाहिए । सप्तम में दो शुभग्रहों का संयोग या दृष्टि रहे तो कन्या राजमहिषी, एक शुभ ग्रह रहने से पतिप्रिया, एक पापग्रह के संयोग से

चञ्चलाक्षी और दो पापों के संयोग से अधमा तथा तीन पापग्रहों के संयोग से पति-घातक होकर वह दूसरे के वंशगामिनी होती है।

सप्तम में जन्म के समय यदि रवि हों तो पति को त्याग करने वाली, मंगल हों तो विधवा और शनि हों तो जरातुरा कन्या होती है।

**पतिव्रतायोगः**

शशाङ्के जन्मलग्नस्थे तृतीयस्थानगेऽपि वा।
शुभग्रहयुते दृष्टे गुरुणा पतिसम्मता।
पतिव्रता च विज्ञेया गुणज्ञा मृदुभाषिणी॥ ५८१॥

**सुधा**—जन्मलग्न में चन्द्रमा के होने से अथवा तीसरे स्थान पर चन्द्रमा के होने से अथवा शुभग्रहों की दृष्टि होने से अथवा गुरु ( बृहस्पति ) से युक्त होने से कन्या सौभाग्य युक्त, पतिव्रता तथा शुभ गुणों से युक्त होती है।

**सुकन्यायोगाः**

यज्जन्मनि सप्तमस्थे भृगौ सौम्यद्वयेक्षिते।
पतिप्रिया विधुमुखी शचीवत् क्षितिमण्डले॥ ५८२॥
लग्ने गुरौ भृगौ वापि कन्याराशिगते बुधे।
मदने मकरे भौमे कर्कस्थे मृगलाञ्छने॥ ५८३॥
अत्यन्तसुन्दरी बाला पत्युः प्रियतमा हि सा।
सर्वसौभाग्यसम्पन्ना पट्टराज्ञीव भूतले॥ ५८४॥
चन्द्रे कर्कस्थिते कन्यागते विधुसुते तथा।
तनौ मीनगते जीवे वृषे भृगुसुते सति॥ ५८५॥
राजकन्या सहस्राली मान्या गुणवती ध्रुवम्।
महाराजस्य पत्नी स्यात्पुण्यशीला विशेषतः॥ ५८६॥

**सुधा**—जिस कन्या के जन्म के समय सप्तमस्थ शुक्र दो शुभग्रहों से देखे जायँ तो पतिप्रिया चन्द्रमुखी वह कन्या इन्द्राणी की तरह भूमण्डल में विराजमान होती है। लग्न में गुरु या शुक्र हों, कन्याराशिस्थ बुध हों, सप्तम मकर में मंगल हों और कर्क में चन्द्रमा हों तो अत्यन्त सुन्दरी कन्या पतिप्रिया, सर्वसौभाग्यसम्पन्ना तथा पृथ्वी पर पट्टरानी की तरह विराजमान होती है। जिस कन्या के जन्म के समय चन्द्रमा कर्क में तथा बुध कन्या में स्थित हों, मीनलग्नस्थ गुरु और वृषस्थ शुक्र हों तो वह राजकन्या हजारों सखियों द्वारा सम्मान्य, गुणवती तथा महाराज की पुण्यवती पत्नी होती है।

**कुरूपस्त्रीयोगः**

विषमे लग्नचन्द्रौ चेत्पापेक्षितयुतावपि।
नराकारसमा नारी कुरूपापि गदातुरा॥ ५८७॥

**सुधा**—विषमराशिस्थ लग्न तथा चन्द्रमा पापग्रह से दृष्ट या पापयुक्त हों तो नराकार की वह कन्या कुरूपा तथा रुग्णा होती है।

### सप्तमस्थग्रहफलानि

सप्तमस्थे दिवानाथे पतिप्रेमविवर्जिता।
वृषे मदनगे राकानाथे बालातिसुन्दरी ॥ ५८८ ॥
पतिप्रिया गुणवती विनीतापि प्रजायते।
कर्कराशिगते भौमेऽथवा मन्दान्विते हरौ ॥ ५८९ ॥
जनुः काले मदनगे बाला वैधव्यमाप्नुयात्।
वामाङ्गनाऽथवा सा हि नियतं कपटप्रिया ॥ ५९० ॥
बुधे तुङ्गे मदनगे सपत्नीसहिता हि सा।
पतिप्रिया परीता स्यान्मुक्तामणिगणैः सदा ॥ ५९१ ॥
गुरौ मदनगे बाला गुणज्ञा धर्मतत्परा।
पतिभक्तिपरा नित्यं शशिभे तु विशेषतः ॥ ५९२ ॥
कवौ मदनगे मीनभवने यदि सम्भवेत्।
भर्त्ता तस्या धनुर्धर्त्ता सङ्गीतरसिका स्वयम् ॥ ५९३ ॥
शनौ मदनगे तस्याः पती रोगाकुलाकुलः।
विकलः पुनरुच्चस्थे धनाढ्यो मोदसंयुतः ॥ ५९४ ॥
सप्तमे सिंहिकापुत्रे कुललाञ्छनकारिणी।
दरिद्राऽथ स्वतुङ्गस्थे नित्यं स्वामिसुखान्विता ॥ ५९५ ॥

**सुधा**—कन्या की कुण्डली में सप्तमस्थ सूर्य के रहने से वह पतिप्रेमरहित होती है। वृष का चन्द्रमा सप्तम में हों तो वह बालिका पतिप्रिया, गुणवती तथा विनीत होती है। कर्कराशि का मंगल या शनि सप्तमस्थ हों तो वह बालिका विधवा हो जाती है या वाराङ्गना ( वेश्या ) होकर सतत छल-कपट करने वाली होती है। उच्चस्थ बुध सप्तमस्थ हों तो बाला सपत्नीसहिता अर्थात् उसका पति दूसरी शादी वाला होता है। साथ ही वह बालिका मुक्तामणिगणों से विभूषित रहती है। गुरु सप्तमस्थ हों तो वह कन्या गुणवती, धर्मतत्परा एवं पतिभक्तिकारिणी होती है, कर्कस्थ गुरु में तो विशेषतः वह उपर्युक्त गुणसम्पन्न होती है। शुक्र मीनस्थ होकर सप्तम में हो तो उसका पति धनुर्धारण करने वाला और वह खुद संगीतरसिका होती है। शनि सप्तमस्थ हों तो उसका पति रोगसंकुल से व्याकुल रहता है, किन्तु उच्चस्थ शनि सप्तमस्थ हों तो वह धनाढ्य तथा प्रसन्न रहता है। राहु सप्तमस्थ हों तो वह बालिका वंश में कलङ्क लगाने वाली तथा दरिद्रा होती है। उच्चस्थ राहु में वह पतिसौख्ययुक्ता होती है।

### वैधव्ययोगाः

चन्द्रात्सप्तमभावस्थाः कुजमन्दागुभास्कराः ।
तनोर्जन्माष्टममदस्थाश्च वैधव्यकारकाः ।। ५९६ ।।
पापमध्यगतौ लग्नचन्द्रौ सद्दृष्टिवर्जितौ ।
जनुः काले यदि तदा बालातिव्यभिचारिणी ।। ५९७ ।।
मेषवृश्चिकगो राहुः सपापोऽष्टमरिष्फगः ।
जनुर्यदि तदा बाढं बाला वैधव्यमाप्नुयात् ।। ५९८ ।।
मृगे तनौ सप्तमस्थौ भवेतां कुज-भास्करौ ।
बाला धनविहीनापि जारेण रमते सदा ।। ५९९ ।।
लग्ने व्यये च पाताले सप्तमे वाऽष्टमे कुजः ।
सपापस्तर्हि जारेण रमते व्यभिचारिणी ।। ६०० ।।
परस्परनवांशस्थौ भवतः कुजभार्गवौ ।
जनुः काले यदि तदाऽन्यगेहे रमतेऽङ्गना ।। ६०१ ।।
सप्तमेशोऽष्टमेशश्च परस्परगृहोपगौ ।
पापेक्षणयुतौ स्यातां बालावैधव्यकारिणौ ।। ६०२ ।।
सप्ताष्टमपती षष्ठे व्यये वा पापपीडितौ ।
असंशयं तदा बाला वैधव्यमुपयाति वै ।। ६०३ ।।

**सुधा**—चन्द्रमा से सप्तमस्थ मंगल, शनि तथा रवि और लग्न से अष्टम तथा सप्तमस्थ वे वैधव्यकारक होते हैं। लग्न तथा चन्द्रमा पापद्वयमध्यगत होकर शुभदृष्टि से वञ्चित रहें तो बालिका व्यभिचारशीला होती है। मेष-वृश्चिकस्थ राहु सपाप होकर अष्टम या द्वादशस्थ हों तो बाला विधवा हो जाती है। मकरलग्न और सप्तमस्थ मंगल तथा सूर्य हों तो दरिद्रा बालिका रहने पर भी जार के साथ रमणशीला होती है। लग्न द्वादश, चतुर्थ, सप्तम या अष्टमस्थ मंगल यदि सपाप हों तो भी वह जार के साथ रमण करती है। मंगल तथा शुक्र परस्पर नवांशस्थ हों तो भी बाला दूसरे के घर में रमणशीला होती है। सप्तमेश तथा अष्टमेश परस्पर एक-दूसरे के भवनस्थ हों और पापग्रह की दृष्टि तथा संयोग रहे तो बाला विधवा हो जाती है। सप्तमेश तथा अष्टमेश षष्ठ या द्वादश स्थान में पापग्रह से पीड़ित हो तो निःसन्देह बालिका विधवा हो जाती है।

### अष्टमस्थग्रहफलानि

जीवेऽष्टमेऽथवा शुक्रे नष्टगर्भा मृतात्मजा ।
भौमे तु कुलटा ज्ञेया चन्द्रे स्वामिसुखोज्झिता ।। ६०४ ।।
शनौ तत्र स्थिते रुग्णपतेः पत्नी, दिनाधिपे ।
सन्तप्ता व्याधिनी राहौ रमतेऽन्यैः सदैव सा ।। ६०५ ।।

**सुधा**—अष्टमस्थ गुरु या शुक्र हों तो बालिका नष्टगर्भा या मृतात्मजा ( जिसकी सन्तान मर जाय ) हो जाती है। मंगल यदि अष्टमस्थ हों तो वह कुलटा होती है। चन्द्रमा यदि अष्टम में हों तो उसे पतिसौख्य नहीं प्राप्त होता है। शनि यदि अष्टमस्थ हों तो वह रुग्ण पति की पत्नी होती है। सूर्य यदि अष्टमस्थ हों तो वह सन्तापयुक्ता और राहु यदि अष्टमस्थ हों तो व्याधियुक्ता होने पर भी दूसरे के साथ रमण करने वाली होती है।

**इति मैथिलपण्डितश्रीदेवचन्द्रझाविरचिते व्यावहारिकज्यौतिषे सर्वस्वे स्त्रीजातकाध्यायः समाप्तः।**

## अथायुर्दायाध्यायः

### ग्रहाणां निसर्गपिण्डायुर्वर्षाणि

विंशतिर्भूर्द्वयं नन्दा धृतिर्विंशतिसंख्यकाः ।
पञ्चाशच्च निसर्गाख्या ग्रहाणां वत्सराः क्रमात् ।। १ ।।
नन्देन्दवो बाणपक्षाः शरक्ष्मा भास्करास्तथा ।
पञ्चेन्दवः कुपक्षाश्च नखाः पिण्डाभिधाः समाः ।। २ ।।
उच्चस्थानामिमे नीचस्थितानामर्धमीहितम् ।
मध्येऽनुपाततो ज्ञेया ग्रहाणां स्फुटवत्सराः ।। ३ ।।

**सुधा**—सूर्यादि सातों ग्रहों की निसर्गायु क्रमशः निम्नाङ्कित है। जैसे सूर्य की २० वर्ष, चन्द्रमा की १ वर्ष, मंगल की २ वर्ष, बुध की ९ वर्ष, गुरु की १८ वर्ष, शुक्र की २० वर्ष और शनि की ५० वर्ष। इसी तरह उपर्युक्त सातों ग्रहों की पिण्डायु निम्नाङ्कित है। जैसे सूर्य की १९ वर्ष, चन्द्रमा की २५ वर्ष, मंगल की १५ वर्ष, बुध की १२ वर्ष, गुरु की १५ वर्ष, शुक्र की २१ वर्ष और शनि की २० वर्ष। ये वर्ष उच्चस्थ ग्रहों के हैं। नीचस्थित ग्रहों की आयु उपर्युक्त आयु का आधा मात्र समझना चाहिए। उच्च तथा नीच के मध्यवर्त्ती ग्रहों की आयु अनुपात से समझना चाहिए।

### निसर्गपिण्डायुःस्पष्टीकरणविधिः

उच्चशुद्धो ग्रहः शोध्यश्चक्रात् षड्भवनो नकः ।
षड्भाधिकोऽसौ यदि चेद्रक्षणीयो यथास्थितः ।। ४ ।।
लिप्तीकृतो हतः स्वाब्दैश्चक्रलिप्ताभिरुद्धृतः ।
फलमब्दादिकं यत्तत् पैण्डये स्पष्टायुरादृतम् ।
नैसर्गिकेऽप्येष एव स्पष्टायुःसाधको विधिः ।। ५ ।।

**सुधा**—स्पष्ट ग्रह में उच्च को घटाने से उच्चोनग्रह यदि ६ राशि से अल्प हों तो १२ राशि में घटावें और ६ राशि से अधिक हों तो यथास्थित रखें। उस अन्तर की कला बनाकर निसर्ग या पिण्डायु के वर्ष से गुणा कर उसमें चक्रलिप्ता (२१६००) से भाग दें तो जो वर्ष, मास एवं दिन प्राप्त हों वही उस ग्रह की स्फुट पिण्डायु या स्फुट निसर्गायु होती है।

### आयुषो हरणम्

उच्चे पूर्णं दलं नीचेऽन्तरे तदनुपाततः ।
लग्नमंशमितं राशितुल्यं केचिद् वदन्ति हि ।। ६ ।।
शत्रुक्षेत्रगताः सर्वे विहायावनिनन्दनम् ।
स्वत्रिभागं, दलं चास्ता हरन्ति न सितार्कजौ ।। ७ ।।

व्ययाद् वामस्थितैः पापैः सर्वार्धत्र्यंशतुर्यकाः ।
पञ्चषष्ठमिता भागाः आयुषो व्यपयान्ति वै ।। ८ ।।
सद्भिरर्धमिहोक्तानामेकर्क्षोपगतेषु यः ।
बली स्वीयं हरेदंशं नान्यः सत्यमतं त्विदम् ।। ९ ।।

**सुधा**—ग्रहों ही उपर्युक्त पिण्डायु अथवा निसर्गायु उच्चस्थ ग्रहों में ही कही गई है । नीचस्थ ग्रहों की आयु उपर्युक्त आयु की आधी होगी । उच्च-नीच के मध्य में अनुपात के द्वारा आयुर्ज्ञान करना चाहिए । जैसे ६ राशि ( १८०० ) में यदि आधी आयु हो तो ग्रहोच्चान्तर में क्या ? यहाँ दोनों ओर ग्रह तथा उच्च की दूरी जानकर ही अनुपात करें । आगत लब्धि को पूर्णायु में घटावें तो उस ग्रह की स्पष्ट पिण्डायु या निसर्गायु होती है । लग्न के द्वारा जितने नवांश भुक्त हो तत्तुल्य वर्ष तथा अनुपातागत मासादि लग्नायु समझना चाहिए । किसी-किसी आचार्य ने राशितुल्य लग्नायु होती है, ऐसा कहा है । मंगल को छोड़कर शत्रक्षेत्र में प्राप्त ग्रह अपने आयु का त्रिभाग ( $\frac{1}{3}$ ) नाश करता है, किन्तु शत्रुगृहगत भी मंगल पूर्णायु ही प्राप्त करता है । शुक्र-शनि के अतिरिक्त सभी ग्रह अस्त होने पर अपनी आयु का आधा भाग नाश करते हैं, किन्तु शुक्र-शनि अस्त होने पर भी पूर्णायु प्राप्त करते हैं ।

बारहवें में यदि पापग्रह हों तो पूरी आयु, ग्यारहवें में पापग्रह के रहने से आधी आयु, दशवें में रहने पर समस्त आयु का त्रिभाग, नवें में पाप के होने से चतुर्थांश, आठवें में पापग्रह होने से पञ्चमांश, सातवें में पाप रहे तो छठा भाग घट जाते हैं ।

शुभग्रहों के तत्तत्स्थानों में रहने से उपर्युक्त का आधा भाग ही घटेगा । जैसा कि बारहवें में आधा, ग्यारहवें में चौथाई, दशवें में षष्ठांश, नवें में अष्टमांश, आठवें में दशमांश और सातवें में द्वादशांश घटता है । यदि एक ही स्थान में दो-तीन ग्रह हों तो उनमें बलिष्ठ ग्रह का ही अंश घटेगा, न कि सभी का; ऐसा सत्याचार्य का मन्तव्य है ।

उदितावयवाढ्या ये भुक्ता नवमभागकाः ।
सार्धोदितोदिताख्यास्ते नवांशास्तैः पृथक् पृथक् ।। १० ।।
ग्रहायुर्दायगुणितात् अष्टोत्तरशतोद्धृतात् ।
लब्धं ग्रहायुषः शोध्यं सपापेऽङ्गे, शुभेक्षिते ।। ११ ।।
तद्दलं शोधयेच्छेषं पिण्डायुः स्फुटमीरितम् ।
निसर्गायुश्च खेटानां ज्ञेयमेवं मनीषिभिः ।। १२ ।।

**सुधा**—लग्न के जितने नवांश व्यतीत हुए हों वे उदित नवांश कहे जाते हैं । जिस नवांश में जन्म हो, उसका जितना भाग बीता हो, उस पर से त्रैराशिक के द्वारा आनीत लब्धि को उदित नवांश में जोड़ने से सार्धोदित उदित नवांश होता है । उनसे ग्रहों के अलग-अलग आयुर्दाय को गुणा कर १०८ से भाग देने पर जो वर्षादि लब्धि आवे उसे सपाप लग्न की स्थिति में ग्रहायु में घटावें । यदि लग्न पर शुभग्रह की दृष्टि

रहे तो पूर्वानीत वर्षादि का आधा ही ग्रहायु में घटावें तो स्फुट पिण्डायु या स्पष्ट निसर्गायु होती है।

अथवा लग्नभुक्तांशकलाभिर्गुणिताद् ग्रहात्।
आयुर्दायादुद्धृताच्च खखर्त्तुक्ष्मासुलोचनैः ॥ १३ ॥
लब्धमन्दादिकं शोध्यमायुषो गणितागतात्।
सपापेऽङ्गे, सौम्यखेटदृष्टे त्वर्धं विशोधयेत्।
शेषं निसर्गपिण्डायुः स्फुटं ज्ञेयं विचक्षणैः ॥ १४ ॥

**सुधा**—अथवा लग्न के भुक्तांशों की कलाओं से ग्रहों की अपनी-अपनी आयु को अलग-अलग गुणा कर २१६०० से भाग दें, लब्ध जो वर्षादिक आवे उसे सपाप लग्न की स्थिति में गणितागत आयु से घटावें। लग्न पर शुभग्रह की दृष्टि रहने से आगत वर्षादि का आधा ही घटावें तो शेष स्पष्ट पिण्डायु या निसर्गायु हो जाती है।

### लग्नायुःसाधनम्

ग्रहाणामुदितं यद्वदायुः साध्यं तनोस्तथा।
तत्र लग्ने बलाढ्ये तु भुक्तांशा राशिवर्जिताः ॥ १५ ॥
लिप्तीकृता द्विशत्या तु हृता वर्षादिकं फलम्।
लग्नायुर्दायसंयुक्तं स्फुटं लग्नायुरादृतम् ॥ १६ ॥
लग्नराशिसमानाब्दान्मासादींश्चानुपाततः।
ज्ञात्वा तद्योगतुल्यं स्याल्लग्नायुरिति केचन।
मन्यन्ते, किन्तु पूर्वोक्तप्रकारो बहुसम्मतः ॥ १७ ॥

**सुधा**—जिस तरह ग्रहों की आयु ( पिण्डायु, निसर्गायु ) लाई जाती है उसी तरह लग्न की भी आयु लानी चाहिए। लग्न बली हो तो ( अर्थात् होरास्वामी गुरुज्ञ-वीक्षितयुता के अनुसार ) लग्नराशि के अतिरिक्त उसके भुक्तांश की कला बनाकर दो सौ ( २०० ) से भाग लें तो जो वर्षादिक लब्धि आवे उसे पूर्वानीत लग्नायु में जोड़ दे तो सत्याभिमत लग्नायु होती है। किसी-किसी आचार्य ने लग्नराशितुल्य वर्ष और भुक्तांश पर से अनुपात के द्वारा मास-दिनादि लाकर दोनों के योग को ही लग्नायु कही है। किन्तु सत्याभिमत पूर्वोक्त प्रकार ही अधिक मान्य है।

### अंशकायुःसाधनम्

परायुषः सप्तमांशं ग्रहायुर्जीवशर्मभिः।
प्रोक्तं, सत्यमतं भुक्तनवांशमसमं स्मृतम् ॥ १८ ॥
नादृतं शर्मभिः प्रोक्तं सत्योक्तं बहुसम्मतम्।
सत्योक्तौ ग्रहलिप्तासु शतद्वयहृतासु यत् ॥ १९ ॥
लब्धं द्वादशभिस्तष्टं शेषमब्दास्तु प्राक्तनात्।
शेषान्मासादिकं चैवं ग्रहायुर्वत्सरादिकम् ॥ २० ॥

तुङ्गवक्रोपगानां तु तदायुस्त्रिगुणं तथा।
वर्गोत्तमे नवांशे वा गृहे द्रेष्काणके निजे ॥ २१ ॥
स्थितानां तद्द्विगुणितं वेद्यं सत्याभिसम्मतम्।
विशेषोऽयं भदत्तोक्तादन्यत्प्रागुक्तिवत्स्फुटम् ॥ २२ ॥
किन्तु भांशसमं होरा वर्षं दद्याद् विशेषतः।
वीर्यान्विता भवेच्चेत् सा तदा राशिसमाब्ददा ॥ २३ ॥
लग्ने सपापे यो ह्रासो या च स्पष्टीकृतिः कृता।
पूर्वोक्तैर्वत्सरैः पूर्वैः सकलं तत् परित्यजेत् ॥ २४ ॥
सत्योपदेशो नियतं वरमन्योक्तितो भृशम्।
किन्तु तुङ्गस्वगेहादिवक्रद्रेष्काणगेषु वै ॥ २५ ॥
ग्रहाणां यद् बहुघ्नत्वं तत्तु भूरि सकृद् भवेत्।
हानिष्वपि सकृत्कार्या या स्यात्तासु महत्तरा ॥ २६ ॥

**सुधा**—जीवशर्मा ने परमायु ( १२० वर्ष ) का सप्तमांश सभी सातों ग्रहों की आयु समान रूप से कही है। उनके कथनानुसार सभी ग्रहों की आयु १७ वर्ष, १ मास, २२ दिन आदि है। किन्तु सत्याचार्य ने जिस किसी भी राशि के यत्संख्यक नवांश में ग्रह हों उसके बराबर ही वर्ष ग्रहायु होती है—ऐसा कहा है। अधिकतर आचार्यों ने सत्याचार्य के ही मत को श्लाघ्य माना है, शर्मोक्त कथन को अनादृत किया है।

सत्याचार्य के मतानुसार ग्रह के राश्यादि को कला बनाकर २०० से भाग देने पर जो लब्धि आवे उसे वर्ष, लब्धि यदि १२ से अधिक आवे तो उसमें भी १२ से भाग देकर शेष को वर्ष समझे। दो सौ से भाग देने के बाद जो शेष ( प्राक्तन ) बचा है उसे बारह से गुणा कर २०० से भाग देने से मास, पुनः शेष को ३० से गुणा कर २०० से भाग देने पर दिन, पुनः शेष को ६० से गुणा और २०० से भाग देने पर घटी और अन्ततः आगत शेष को ६० से गुणा कर और २०० से भाग देने पर पल होते हैं। इस तरह प्राप्त वर्षादिक ग्रहायु सत्याभिमत है।

सत्याचार्यानुसार ग्रह यदि अपने उच्च में अथवा वक्रावस्था में रहें तो आगत आयु को त्रिगुण, अपने वर्गोत्तम या नवांश या स्वगृह अथवा अपने द्रेष्काण में हो तो आयात आयु को द्विगुण करना चाहिए।

सत्याचार्यानुसार लग्न भुक्तनवांशतुल्य आयुःप्रद होता है। यदि लग्न बलवान् हो तो वह भुक्तराशितुल्य वर्ष आयु देता है। उनके मत में सार्धोदितोदितोक्त ( क्रूरोदय ) रीति से अपहरण तथा पिण्डायु एवं निसर्गायु से आयु की स्पष्टी क्रिया नहीं करनी चाहिए। सत्याचार्य के मत में आयु का द्वैगुण्य या त्रैगुण्य जीवशर्मादि कथन से विशेष है, अन्य बातें समान ही हैं। होरा ( लग्न ) यदि बलवती रहती तो नवांशतुल्य वर्षप्रद होती है। सपाप लग्न में जो ह्रास या ग्रहों के वर्षों के द्वारा जो स्पष्टीकरण किया गया है वह भी सत्यमतानुसार परित्याज्य है। सत्योपदेश अन्य

आचार्यों के कथनापेक्षया अवश्य श्रेष्ठ है। किन्तु उच्च वक्र स्वगेहादि में ग्रहों के रहने से जो द्वैगुण्य या त्रैगुण्य कहा गया है, वह यदि असकृत् प्राप्त हो तो एकमात्र ( बृहत्तर ) ही करना, न कि बार-बार। इसी तरह यदि ह्रास भी अनेकत्र प्राप्त हो तो एकमात्र महत्तर ह्रास करना चाहिए।

**रश्मिजायुः**

उच्चगेषु दिनेशादिग्रहेषु परररश्मयः।
दशाङ्कशरबाणाद्रिवसुबाणमिताः क्रमात् ॥ २७ ॥
उच्चोनं खेचरं षड्भादल्पं चक्राद् विशोधयेत्।
कलीकृतं स्वकीयोच्चरश्मिभिर्गुणयेत्ततः ॥ २८ ॥
भजेत्तच्चक्रलिप्ताभिर्लब्धं वर्षादिकं फलम्।
रश्मिजातं ग्रहाणां स्यादायुर्विज्ञजनोदितम् ॥ २९ ॥

**सुधा**—सूर्यादि ग्रह यदि उच्चस्थ हों तो उनकी परम रश्मि क्रमशः १०।९।५।५।७।८।५ ये हैं। ग्रह में उच्च को घटाने से ६ राशियों से अल्प शेष में, उसे १२ राशियों में घटावें, शेष की कला बनाकर अपनी-अपनी उच्च रश्मि से गुणा कर चक्र-लिप्ता ( २१६०० ) से भाग दें तो वर्षादिक लब्धि ही ग्रहों की रश्मिज आयु होती है।

**रश्मेर्हरणम्**

तुङ्गवक्रोपगे नैजगृहे वाति सुहृद्गृहे।
ग्रहे द्विगुणिता वक्रावसानेऽष्टमभागकैः ॥ ३० ॥
हीना, रिपुगृहस्थे तु द्वादशांशविवर्जिताः।
अस्तङ्गते दलोनास्ते हित्वा भार्गवसूर्यजौ।
रश्मयो, रश्मियोगो हि रश्मिजायुर्बुधैः स्मृतम् ॥ ३१ ॥

**सुधा**—ग्रह यदि अपने उच्च, अपने घर या अपने अधिमित्र गृह में हों या वक्री हों तो आनीत रश्मि को द्विगुणित करें। वक्रावसान से यदि ग्रह हों तो अष्टमांश घटा दें, शत्रुक्षेत्रस्थ हों तो द्वादशांश घटा दें, अस्तंगत हों तो शनि-शुक्रातिरिक्त ग्रहों में आधा घटा दें तो आगत रश्मियों का योग ही रश्मिज आयु होती है—ऐसा अभिज्ञों ने कहा है।

**आयुषां ग्राह्याग्राह्यत्वनिर्णयः**

लग्नेशे प्रबले सौम्यदृष्टेंऽशायुरभीप्सितम्।
सूर्ये बलिष्ठे पिण्डायुर्निसर्गायुर्विधौ स्मृतम् ॥ ३२ ॥
द्वयोस्तुल्यबलत्वे तु योगार्धं कथितं बुधैः।
त्रयाणां बलसाम्ये तद्योगत्र्यंशमुदीरितम् ॥ ३३ ॥

सूर्ये तुङ्गस्थिते चान्ये बलिष्ठाः केन्द्रकोणगाः ।
एवमुच्चस्थितैः खेटैर्योगे वा शशहंसके ।। ३४ ।।
योगे केमद्रुमे वापि बलिष्ठे शशलाञ्छने ।
राजयोगेषु सर्वेषु पैण्डचमाह पराशरः ।। ३५ ।।
गुरौ लग्नस्थिते कर्मगते भानौ विधौ सुखे ।
सप्तमे वा, शुभैः केन्द्रत्रिकोणोपचयस्थितैः ।। ३६ ।।
आपोक्लिमगतैः पापैरपि पिण्डायुरादृतम् ।
बलिष्ठे सर्वतो भौमेऽष्टवर्गायुस्तथा विधोः ।। ३७ ।।
पुत्रे रश्मिजमाचार्ये सुराणां तु दशाभिधम् ।
शुक्रे वलिष्ठे चक्रायुः सामुदायं शनौ स्मृतम् ।
एवमाचार्यमुख्यानां बहूनामस्ति सम्मतम् ।। ३८ ।।

**सुधा**—अनेकविध पिण्डायु, निसर्गायु, अंशायु आदि आयुर्दायों में कहाँ किसका ग्रहण करना चाहिए इसका विस्तृत विवरण यहाँ दिया गया है ।

सामान्यतः लग्नेश सहित सातों ग्रहों में सर्वाधिक प्रबल ग्रहानुसार ही आयुर्दाय ग्राह्य होता है । जैसे प्रबल लग्नेश पर शुभग्रह की दृष्टि रहें तो अंशायु ग्राह्य है । सूर्य बलिष्ठ रहें तो पिण्डायु, चन्द्रमा बलिष्ठ हों तो निसर्गायु । दो ग्रह समान बल वाले हों तो दोनों आयुर्दायों का योगार्ध, यदि तीन ग्रह समान बल वाले हों तो तीनों के योगत्र्यंश ग्राह्य होता है ।

सूर्य उच्चस्थ हो और अन्य ग्रह भी केन्द्रकोणस्थ होकर प्रबल हों अथवा उच्चस्थ अधिकतर ग्रह हो या शशहंससंज्ञक योग हों, केमद्रुमयोग में भी चन्द्रमा प्रबल हों या सभी राजयोगों में पिण्डायु ही ग्राह्य है—ऐसा पराशर ने कहा है । गुरु लग्नस्थ हों या सूर्य राज्यस्थानगत हो या चन्द्रमा चौथे वा सातवें स्थान में हों, साथ ही शुभ-ग्रह केन्द्र या नवम, पञ्चम या उपचयस्थान में हों और पापग्रह यदि आपोक्लिमस्थ हों तो पिण्डायु ही ग्राह्य है ।

सभी ग्रहों में यदि मंगल बलिष्ठ हो तो अष्टवर्गायु, बुध वलिष्ठ हो तो रश्मिजायु, गुरु बलिष्ठ हो तो दशायु, शुक्र बलिष्ठ हों तो चक्रायु और शनि वलिष्ठ हों तो सामुदायायु ग्राह्य हैं—ऐसा बहुत से आचार्यों का मन्तव्य है ।

## जैमिनिमहर्षिमतायुर्विचारः

आयुः पितृदिनेशाभ्यामित्यादि दशसूत्रकैः ।
महर्षिजैमिनिप्रोक्तमायुरेवं विचिन्तयेत् ।। ३९ ।।
चरे लग्नेशाष्टमेशौ वा स्थिरद्विस्वभावयोः ।
दीर्घायुर्जातको ज्ञेयो मध्यायुस्तौ चरे स्थिरे ।। ४० ।।

किं वा तौ द्विस्वभावे, हीनायुर्यदि तौ स्थिरे।
अथवैकश्चरेऽन्यस्तु द्विस्वभावे भवेद्यदि ॥ ४१ ॥

**सुधा—दीर्घायुयोग**—( १ ) लग्नेश, अष्टमेश जहाँ कहीं भी चरराशि में हों तो जातक दीर्घायु होता है। ( २ ) अथवा लग्नेश, अष्टमेश दोनों में से कोई स्थिर में तथा दूसरा द्विस्वभाव में हों तो भी जातक दीर्घायु होता है।

**मध्यायुयोग**—( १ ) लग्नेश, अष्टमेश दोनों चर-स्थिर में अर्थात् कोई एक चर में और दूसरा स्थिर में; जैसे लग्नेश चर में और अष्टमेश स्थिर में अथवा लग्नेश स्थिर में और अष्टमेश चर में हों तो मध्यायुयोग होता है। ( २ ) अथवा लग्नेश, अष्टमेश दोनों द्विस्वभाव में हो तो भी मध्यायुयोग होता है।

**हीनायुयोग**—( १ ) लग्नेश, अष्टमेश दोनों यदि स्थिर में हों तो हीनायु। ( २ ) एक चर में दूसरा द्विस्वभाव में हों तो भी हीनायु समझना चाहिए।

**स्पष्टार्थ चक्र**

| | १ | २ | ३ |
|---|---|---|---|
| दीर्घायुः | चरे लग्नेशः<br>चरेऽष्टमेशः | स्थिरे लग्नेशः<br>द्विस्वभावेऽष्टमेशः | स्थिरेऽष्टमेशः<br>द्विस्व० लग्नेशः |
| मध्यायुः | चरे लग्नेशः<br>स्थिरे अष्टमेशः | स्थिरे लग्नेशः<br>चरेऽष्टमेशः | लग्नेशः द्विस्व०<br>अष्टमेशः द्विस्व० |
| हीनायुः | चरे लग्नेशः<br>द्विस्व० अष्टमेशः | चरेऽष्टमेशः<br>द्विस्व० लग्नेश | लग्नेशः स्थिरे<br>अष्टमेशः स्थिरे |

**प्रकारान्तरेणायुर्विचारः**

यथा लग्नाष्टमेशाभ्यां विचारः कृत आयुषः।
तथा मन्देन्दुतो वापि लग्नेन्दुभ्यां विचारयेत् ॥ ४२ ॥

**सुधा**—जिस तरह लग्नेश-अष्टमेश पर से आयुर्विचार किया गया है उसी तरह शनि-चन्द्रमा या लग्न-चन्द्रमा पर से आयुर्विचार करना चाहिए।

**विशेष**—मन्द पद से शनि तथा लग्न दोनों का ग्रहण होता है, अतः उपर्युक्त अर्थ बहुसम्मत अर्थ किया गया है।

कई एक ने मन्द पद से शनि मात्र का, कई दूसरों ने मन्द पद से लग्न मात्र का ही ग्रहण किया है, जो अग्रिम सूत्र से खण्डित हो जाता है।

**तृतीयप्रकारेणायुर्विचारः**

लग्नेशाष्टमनाथाभ्यामायुः प्रोक्तं यथा पुरा।
तथा होराजनुर्लग्नवशादपि निभालयेत् ॥ ४३ ॥
एवमुक्तप्रकारेषु दीर्घमध्याल्पनिर्णयः।
प्रकारद्वयसंवादात्कार्यो भिन्नेषु च त्रिषु ॥ ४४ ॥

होराजनुर्लग्नतो यद्ग्राह्यमायुस्तदेव वै।
चन्द्रे लग्ने सप्तमे वा लग्नेन्दुभ्यां तदन्यथा।
स्थिते चन्द्रे शनीन्दुभ्यामायुर्दायं विचिन्तयेत्॥ ४५॥

**सुधा**—लग्नेश-अष्टमेश के द्वारा जिस तरह पहले आयुर्विचार किया गया है उसी तरह लग्न तथा होरालग्न पर से भी आयुर्विचार करना चाहिए। इस प्रकार पूर्वोक्त प्रकारत्रय में दीर्घायु, मध्यायु तथा अल्पायु का निर्णय संवाद से करना चाहिए। अर्थात् दो प्रकार से जो आवे उसे ही मानना चाहिए। यदि तीनों प्रकार से आनीत आयु भिन्न-भिन्न हो तो तृतीय प्रकार लग्न होरा लग्न से आनीत आयु ही ग्राह्य है।

चन्द्रमा लग्न या सप्तम में रहें तो लग्न-चन्द्रमा पर से और लग्न सप्तम के अतिरिक्त स्थान में वे हों तो शनि-चन्द्रमा पर से आयुर्दाय लाना चाहिए।

जैसा कि इस सम्बन्ध में वृद्धवचन इस प्रकार है—

'लग्नेशादष्टमेशाच्च योगैकः कथितो द्विज।
होरालग्नविलग्नाभ्यां योगमन्यं विचिन्तयेत्॥
तृतीयं शनिचन्द्राभ्यां चिन्तनीयं सदा द्विज।
लग्नेन्दौ मदने वापि चिन्तयेल्लग्नचन्द्रतः'॥

### दीर्घमध्याल्पायुर्योगानाहुर्वृद्धाः

दीर्घे योगत्रयेणैवं नखचन्द्र( १२० )समाब्दकाः।
योगद्वयेन वस्वाशाः ( १०८ ) योगैकेन रसाङ्ककाः ( ९६ )॥४६॥
मध्ये योगत्रयेणैवं खाष्ट( ८० )संख्याब्दकाः स्मृताः।
द्व्यगा (७२) योगद्वयेनात्र योगैकेनाब्धिषड्मिताः (६४)॥ ४७॥
अल्पे योगत्रयेणात्र द्वात्रिंशन्मित( ३२ )वत्सराः।
योगद्वयेन षट्त्रिंशत् ( ३६ ) योगैकेन च खाब्धयः ( ४० )॥ ४८॥

**सुधा**—दीर्घायु के तीन भेद १२०, १०८, ९६ हैं।
मध्यायु के तीन भेद ८०, ७२, ६४ हैं।
अल्पायु के तीन भेद ४०, ३६, ३२ हैं।
दीर्घायु : एकयोगे ( ९६ ), योगद्वये ( १०८ ), योगत्रये १२०।
मध्यायु : एकयोगे ( ६४ ), योगद्वये ( ७२ ), योगत्रये ( ८० )।
अल्पायु : योगत्रये ( ३२ ), योगद्वये ( ३६ ), एकयोगे ( ४० )।

### अथ स्पष्टायुः साधनप्रकारः

योगकारकतत्त्वानां युतिरंशादिका च या।
हृता कारकसंख्याभिर्गुणिता प्राप्तखण्डकैः॥ ४९॥
अंशादिकं फलं, तच्च द्वादशघ्नं दिनादिकम्।
भुक्तमायुर्विशोध्यं तत्सिद्धायुर्मानतः स्फुटम्॥ ५०॥

**सुधा**—योगकारक ग्रहों के अंशादिक योग में योगकारकों की संख्या से भाग दें, पुनः यथाप्राप्त खण्डों से गुणा कर अंशादिक गुणनफल को द्वादशघ्न करने पर ( १२ से गुणा करने पर ) दिनादिक भुक्त आयु समझें। उसे मास-वर्ष बनाकर पूर्व-सिद्ध ( दीर्घ-मध्य-अल्प ) आयु में घटावें तो स्पष्ट आयु हो जाती है।

अर्थात् योगकारक ग्रह ( जैसे कि—१. लग्नेश-अष्टमेश, २. शनि-चन्द्रमा या लग्न-चन्द्रमा, ३. जन्मलग्न तथा होरालग्न ) जितने हों उनके अंशादिकों के योग में योगकारक ग्रहों की संख्या से भाग लें, अर्थात् एक योग से सिद्ध आयुर्दाय हो तो दो से, दो योगों से सिद्ध में चार से और तीन योगों से सिद्ध में छः से भाग लें। इस तरह जो अंशादिक लब्धि हो उसको यथाप्राप्त खण्ड से गुणा करने से जो अंशादिक गुणनफल हो उसे बारह से गुणा करें तो दिनादिक भुक्त आयु होती है। इस भुक्त आयु को सिद्ध दीर्घ-मध्य-अल्प आयु में घटावें तो शेष स्पष्ट आयु होती है।

जैसे किसी कल्पित कुण्डली में कल्पित अंशादिक योगकारक ग्रह निम्नाङ्कित हैं—

लग्न = २५।२३।५३
होरालग्न = ११।२१।५५
शनि = ११।१५।१२
चन्द्र = १४।१८।१६
_______________
योग—६१।२९।१६

इसमें योगकारक संख्या ४ से भाग देने पर लब्ध अंशादि = १५°।२२'।१९"। इसे दो प्रकार से मध्यायु होने के कारण दूसरे खण्ड ३६ से गुणा किया तो गुणनफल = ५५'३।२३'।२४"। इसे १२ से गुणा करने पर गुणनफल = ६६४०।४०।४८ = दिनादिक भुक्त आयु। इसमें ३० से भाग देने पर २२१।१०।४०।४८ = मासादिक आयु। पुनः वर्ष बनाने के लिए १२ से भाग देने पर १८ वर्ष ५ मा० १० दि० ४० घ० ४८ प०

= व० मा० दि० घ० प०
　१८।५।१०।४०।४८ । इसे दो योग सम्बन्धी मध्यायु—वर्ष ७२ में घटाने पर

७२—( १८।५।१०।४०।४८ ) = व० मा० दि० घ० प०
　　　　　　　　　　　　　५३।६।१९।१९।१२ । यही स्पष्ट आयु हुई।

अब प्रस्तुत उदाहरण, जिसे मैं आरम्भ से ही लेकर चला आ रहा हूँ, को लीजिए—

**जन्माङ्गचक्र**




| | |
|---|---|
| लग्नेशो बुधश्चरे<br>अष्टमेशो गुरुर्द्विस्वभावे | हीनायुः |
| शनिर्द्विस्वभावे<br>चन्द्रः स्थिरे | दीर्घायुः |
| लग्नं द्विस्वभावे<br>होरालग्नं द्विस्वभावे | मध्यायुः |

भाग देने पर उच्चबल होता है। इस तरह सूर्य का उच्चबल = १६।५५ है, अतः सूर्य का पञ्चवर्गी बल—

गृहबल = ७।३०
हद्दाबल = ३।४५
द्रेष्काणबल = २।३०
नवांशवल = २।३०
उच्चबल = १६।५५

योग = ३३।१०

इसका चतुर्थांश = ८।१७ = विंशोपकबल। यह पञ्चाधिक तथा दशाल्प है, अतः सूर्य मध्यबली हुए।

विशेष—यहाँ ग्रहों का मित्र-सम-शत्रु का विचार अब्दप्रवेशीय नियमानुसार समझना चाहिए—

'द्वित्रिकस्थानगः खेटात् समः पञ्चत्रिनन्दगः।
लाभगश्च सुहृत्प्रोक्तः केन्द्रगो रिपुरुच्यते'॥

इस तरह सभी ग्रहों का साधित पञ्चवर्गी बल निम्नाङ्कित है—

| ग्रह | सू० | चं० | मं० | बु० | गु० | शु० | श० |
|---|---|---|---|---|---|---|---|
| गृह | ७।३० | ७।३० | ३०।० | ७।३० | ३०।० | ७।३० | ३०।० |
| हद्दा | ३।४५ | ३।४५ | ११।१५ | ७।३० | १५।० | ११।१५ | ११।१५ |
| द्रे० | २।३० | ७।३० | १०।० | ५।० | २।३० | ५।० | ५।० |
| नवां० | २।३० | २।३० | ५।० | २।३० | ३।४५ | ३।४५ | ३।४५ |
| उच्च० | १६।५५ | १८।९ | १३।१ | ११।८ | ३।३३ | १५।४३ | ६।३४ |
| योग | ३३।१० | ३९।२४ | ६९।१६ | २३।४८ | ५४।४८ | ४३।१३ | ५६।३४ |
| विंशो० | ८।१७ | ९।५४ | १७।१९ | ५।५७ | १२।४२ | १०।४८ | १४।८ |
| | मध्यबली | मध्यबली | बली | मध्यबली | बली | बली | बली |

शराल्प = हीनबली/शराधिक, किन्तु दशाल्प = मध्यबल, दशाधिक = बली ग्रह होते हैं; यथा—

'शराल्पो बलहीनस्तु मध्यवीर्यः शराधिकः।
बली दशाधिको ज्ञेयः पञ्चवर्गीबले ग्रहः'॥

### अथाब्दमध्येऽरिष्टबोधकं त्रिपताकिचक्रम्

तिस्रः पूर्वापरास्तिस्रो दक्षिणोत्तरगास्तथा।
रेखा विलिख्य कोणेभ्योऽन्योन्यरेखोत्थवेधतः॥ ३७॥
त्रिपताकात्मकं चक्रं विविधारिष्टबोधकम्।
पूर्वापरामध्यवर्ति रेखाग्रे वर्षलग्नकम्॥ ३८॥

विन्यस्य विलिखेद्राशीन् द्वादशापि ततोऽग्रगान् ।
सैके गताब्दे नवभिर्भक्ते शेषसमे गृहे ।। ३९ ।।
जनुश्चन्द्रान्न्यसेच्चन्द्रं पुनः सैके गताब्दके ।
चतुर्भक्ते शेषतुल्ये स्वस्वस्थानात् समान् ग्रहान् ।। ४० ।।
एवं राहोश्चन्द्रवेधेऽरिष्टं, चन्द्रेऽथ केतुना ।
शनिनापि भवेद्रोगो वेधे कौजे तनौ व्यथा ।
चन्द्रे शुभग्रहैर्विद्धे विविधं सौख्यमादिशेत् ।। ४१ ।।

**सुधा**—तीन पूर्वापर तथा तीन दक्षिणोत्तर रेखाओं को खींचकर परस्पर कोण से तीन-तीन रेखाओं से विद्ध करने से त्रिपताकिचक्र बनता है। उसमें पूर्वापर रेखाओं के बीच वाली रेखाग्र पर वर्षलग्न को लिखकर क्रमशः बारहों राशियों को लिखें। फिर गतवर्ष संख्या में एक जोड़कर नौ का भाग देने से जो शेष बचे, जन्मकालिक चन्द्रराशि से उतने ( शेषतुल्य ) स्थान में चन्द्रमा को लिखें। पुनः सैकगतवर्ष संख्या में चार से भाग देकर जो शेष हो, जन्मकालिक अपने आश्रित स्थानों से उतने ( शेष-तुल्य ) स्थान में अन्य ग्रहों को लिखें। इस प्रकार राहु चन्द्रमा में वेध होने से अरिष्ट, केतु और शनि से चन्द्र वेध होने पर रोग, मंगल से चन्द्रवेध होने पर शारीरिक पीड़ा और शुभग्रह से वेध होने पर वर्षभर विविध सौख्य कहना चाहिए।

जैसे पूर्वदत्त उदाहरण में जन्मलग्नकुण्डली तथा वर्षलग्नकुण्डली इस प्रकार हैं—

**जन्माङ्गचक्र**




**वर्षलग्नकुण्डली**




प्रस्तुत उदाहरण में वर्षसंख्या = ३६ है। एक जोड़ने से ३६ + १ = ३७। इसमें ९ से भाग देने पर शेष = १। अतः जन्मकालिक राशि में ही चन्द्रमा हुए और उसी सैकगत वर्षसंख्या में ४ से भाग देने पर शेष = १। अतः शेष समग्रह भी जन्मकालिक स्थान में ही हुए। यहाँ चन्द्रमा को केवल शुक्र से वेध है, अतः वर्षफल सौख्यपूर्ण होगा।

त्रिपताकि चक्र इस प्रकार होगा—




**मुद्दादशानयनम्**

जन्मर्क्षसंख्यया युक्ता गताब्दा दृग्विहीनिताः ।
नवभिश्च हृताः शेषादाचंक्वादिदशाः स्मृताः ।। ४२ ।।

**सुधा**—जन्मनक्षत्र संख्या में गताब्द जोड़ दें, दो घटाकर नौ से भाग दें तो शेष पर से आ० चं० कु० रा० जी० श० बु० के० शु० की क्रमशः दशा होती है ।

जैसे यहाँ जन्मनक्षत्र उत्तराषाढ़ की संख्या २१ में गतवर्ष संख्या ३६ जोड़ने से ३६ + २१ = ५७ । इसमें दो घटाने से ५७ — २ = ५५ । पुनः नौ से भाग देने पर शेष = १, अतः सूर्य से आरम्भ कर मुद्दा या मुग्धा दशा होगी ।

मुद्दादशा का मान चक्र इस प्रकार है—

| ग्रह | सू० | चं० | मं० | रा. | गु० | श० | बु० | के० | शु० |
|---|---|---|---|---|---|---|---|---|---|
| मा० | ० | १ | ० | १ | १ | १ | १ | ० | २ |
| दि० | १८ | ० | २१ | २४ | १८ | २७ | २१ | २१ | ० |

इसके आनयन की विधि इस प्रकार है—जैसे सूर्य के विंशोत्तरी दशावर्ष = ६, अतः $\frac{६ \times १}{१२०} = \frac{१}{२०}$ इसे १२ से गुणा करने पर $\frac{३}{५}$, पुनः ३० से गुणा करने पर $\frac{३ \times ३०}{५}$ = १८ = दिन । इसी तरह चन्द्रादि ग्रहों का भी मुद्दादशानयन जानना चाहिए ।

**वर्षेशसूर्यफलम्**

रवौ वर्षाधिपे पूर्णबलाढ्ये राज्यसत्सुखम् ।
पुत्रार्थजनितं चापि यशः शुभ्रं रिपुक्षयः ।। ४३ ।।

वर्षेशे मध्यबलिनि मध्यमं सकलं फलम् ।
स्वजनेन विवादश्च स्थानभ्रंशो नृपाद्भयम् ।। ४४ ।।
शरीरे कृशता चापि मुथशीलः शुभैर्न चेत् ।
निर्बलेऽब्दपतौ तस्मिन् धनक्षयशुचोऽरिभीः ।
लोकापवादजनितं दुःखं पुत्रसुहृद्भयम् ।। ४५ ।।

**सुधा**—वर्षेश सूर्य पूर्णबली हों तो राज्यसुख, पुत्र-धनजनित सौख्य, शुभ्रयश एवं शत्रुक्षय आदि अनेक सत्फल होते हैं । वर्षेश मध्यबली हों तो सभी उपर्युक्त फल मध्यमाकारक होते हैं । साथ ही वर्षेश को शुभग्रह से इत्थशाल यदि नहीं हों तो आत्मीय जनों से विवाद, स्थानच्युति, राजभय एवं शारीरिक दुर्बलता होती है । वर्षेश यदि निर्बल हों तो धनक्षय, शोक, शत्रुभय एवं लोकापवादजन्य दुःख तथा पुत्र-मित्र को भय कहना चाहिए ।

**वर्षेशचन्द्रफलम्**

शशाङ्केऽब्दपतौ पूर्णबलाढ्ये विविधं सुखम् ।
वित्तपुत्रकलत्रादिजनितं राजसौहृदम् ।। ४६ ।।
वस्त्राभरणगन्धादिप्राप्तिर्लाभश्च सम्पदाम् ।
वर्षेशे मध्यबलिनि मध्यमं सकलं फलम् ।। ४७ ।।
शत्रुता सुतमित्राद्यैः कार्श्यं शारीरिकं तथा ।
यदीशराफः पापेन तदेदं फलमादिशेत् ।। ४८ ।।
निर्बलेऽब्दपतौ शीतकफाद्यामयचौर्यभीः ।
स्वजनैर्विग्रहश्चापि क्लेशो मृत्युसमो भवेत् ।। ४९ ।।

**सुधा**—वर्षेश चन्द्रमा पूर्णबलयुक्त हों तो अनेकविध सौख्य होते हैं । धन-पुत्र-कलत्रजनित सौख्य, राजा से मित्रता, वस्त्र-आभूषण-गन्धादि तथा विविध सम्पत्तियों की प्राप्ति होती है । मध्यबली वर्षेश हों तो सभी उपर्युक्त फल मध्यमरूप से कहें । पापग्रह से वर्षेश को ईशराफ हो तो पुत्र-मित्र आदियों से शत्रुता, शारीरिक दुर्बलता आदि होते हैं । निर्बल वर्षेश में शैत्य कफादि रोग तथा चोरी का भय कहें । अपने जनों से विरोध तथा मृत्युतुल्य क्लेश का अनुभव भी कहना चाहिए ।

**वर्षेशभौमफलम्**

भौमे पूर्णबलोपेतेऽब्दपे कीर्त्तिरिपुक्षयौ ।
सेनापतित्वमाप्तिश्च कुलोचितपदस्य च ।। ५० ।।
मित्रपुत्रार्थवित्तादिजनितं सुखमुत्तमम् ।
मध्येऽब्दपेऽवनिसुते रक्तस्रावोऽस्त्रतो हतिः ।। ५१ ।।

प्रभुत्वं स्वजने मध्यं पूर्वोक्तं फलमादिशेत् ।
हीनेऽब्दपेऽवनिसुते भयं शत्रोस्तथाग्नितः ।। ५२ ।।
कार्यध्वंसो रोगभीतिर्विदेशगमनं क्षयः ।
किञ्चैतत्सकलं जीवदृष्टयभावेऽब्दपे भवेत् ।
जीवदृष्टेऽशुभं सर्वमल्पतो निर्दिशेद् बुधः ।। ५३ ।।

**सुधा**—पूर्णबलयुक्त मंगल यदि वर्षेश हों तो यश, शत्रुक्षय, सेनापतित्व तथा वंशपरम्परागत पदप्राप्ति एवं मित्र-पुत्र-धनादिजनित उत्तम सुख की प्राप्ति होती है। मध्यबली मंगल यदि वर्षेश हों तो रक्तस्राव एवं अस्त्र से आघात होते हैं। अपने जन में मुख्यता तथा पूर्वोक्त फल मध्यम रूप से कहना चाहिए।

हीनबल मंगल यदि वर्षेश हों तो शत्रु तथा अग्नि से भय, कार्यध्वंस, रोगभय, विदेशगमन तथा विनाश आदि अशुभ फल होते हैं। किन्तु ये अशुभ फल वर्षेश पर गुरु की दृष्टि नहीं रहने पर ही कहना चाहिए। गुरुदृष्टि रहने पर उपर्युक्त अशुभ फल अल्पमात्रा में कहना चाहिए।

### वर्षेशबुधफलम्

सौम्येऽब्दपे बलवति शास्त्रार्थे विजयोऽपि च ।
ज्ञानं कलागणितजं गुरुत्वं च नृपाश्रयः ।। ५४ ।।
राजमन्त्रित्वमथवा धनाप्तिस्तु विशेषतः ।
मध्यवीर्ये शशिसुते मध्यमं फलमादिशेत् ।। ५५ ।।
शुभग्रहेत्थशालेन पुत्रमित्रसुखं तथा ।
वाणिज्यवर्त्तनादौ च लाभः परिभवोऽन्यथा ।। ५६ ।।
सौम्येऽब्दपेऽधमबले बलबुद्धिक्षयो भृशम् ।
धनक्षयोऽपि निक्षेपाद् विपद्धानिश्च सर्वथा ।। ५७ ।।

**सुधा**—बली बुध वर्षेश हो तो शास्त्रार्थ में विजय, कला-गणितजन्य ज्ञान की वृद्धि, गुरुता एवं राजाश्रय या राजमन्त्रित्व, विशेषतः धनलाभ कहना चाहिए। बुध वर्षेश होकर मध्यबली हों तो उपर्युक्त फल मध्यमरूप का कहना चाहिए। शुभग्रह से वर्षेश को इत्थशाल यदि हों तो पुत्र-मित्रसौख्य एवं वाणिज्य-व्यवहार से लाभ कहें। अन्यथा इत्थशाल के अभाव और इशराफ की सत्ता में परिभव (सर्वथा विनाश) कहें।

अधम बली बुध वर्षेश हों तो बल-बुद्धि-धर्मक्षय एवं निक्षेप से विपत्ति तथा सर्वथा हानि होती है।

### वर्षेशगुरुफलम्

गुरौ बलयुतेऽब्देशे परिवारसुखं धनम् ।
धर्मी गुणग्रहिलता लाभो राजाश्रयान्निधेः ।। ५८ ।।

विश्वास्यत्वं गुरुत्वं च विक्रमाप्ती रिपुक्षयः ।
मध्यवीर्ये सुरगुरौ मध्यमं सकलं फलम् ।। ५९ ।।
राजसङ्गोऽपि विज्ञानशास्त्रज्ञत्वं च निर्दिशेत् ।
असद्ग्रहेणेशराफे दारिद्र्यं धनसङ्क्षयः ।। ६० ।।
कलत्रपीडनं चापि निखिलं त्वशुभं फलम् ।
जीवेऽब्देशेऽधमबले धर्मार्थसुखसङ्क्षयः ।। ६१ ।।
सुतमित्रकलत्रेभ्यो विरोधः कफरोगभीः ।
लोकापवादाद् वैकल्यं रिपुभीः कलहीजनैः ।। ६२ ।।

**सुधा**—प्रबल गुरु यदि वर्षेश हों तो परिवारसुख, धन-धर्मप्राप्ति, गुणग्राहिता और राजाश्रय से निधि की प्राप्ति कहें। ऐसे समय में मनुष्य को गुरुत्व एवं विश्वास्यत्व, पराक्रम की प्राप्ति तथा शत्रुक्षय होते हैं।

मध्यबली गुरु यदि वर्षेश हों तो सभी फल मध्यम रूप के होते हैं। किन्तु राजा के साथ संसर्ग, विज्ञानशास्त्रज्ञता भी होती है। पापग्रह से यदि वर्षेश को ईशराफ योग हो तो दरिद्रता, धनक्षय, स्त्रीपीड़ा आदि अनिष्ट फल होते हैं। गुरु निर्बल होकर वर्षेश हों तो धर्म-अर्थ-सुख—सबों का विनाश, पुत्र, मित्र एवं स्त्री से विरोध, कफ-रोगप्रकोप, लोकापवाद से विकलता, शत्रुभय तथा लोगों से विरोध होता है।

## वर्षेशशुक्रफलम्

बलाढ्ये भार्गवेऽब्देशे नैरुज्यं मिष्टभोजनम् ।
राजाश्रयाद्धनं सौख्यं भोगतोषविलासिताः ।। ६३ ।।
मध्यवीर्ये कवावब्दपतौ मध्यं फलं स्मृतम् ।
गुप्तदुःखं स्तोकवृत्तिः पापेक्षितयुतेऽब्दपे ।। ६४ ।।
विपदोऽर्थक्षयो भूरि सकलं त्वशुभं दिशेत् ।
दुर्बलेऽब्दपतौ शुक्रे वृत्तिच्छेदो मनोव्यथा ।। ६५ ।।
लोकोपहासविपदः कष्टादन्नाशनं भवेत् ।
द्वेषः कलत्रपुत्राद्यैः वैकल्यं न सुखं क्वचित् ।। ६६ ।।

**सुधा**—वर्षेश शुक्र पूर्णबली हों तो नैरुज्य, प्रतिदिन मिष्टान्नभोजन, राजाश्रय के कारण धनलाभ, भोग, सन्तोष एवं विलासिताजन्य सौख्य की प्राप्ति होती है। मध्यबली शुक्र यदि वर्षेश हों तो सभी फल मध्यम रूप के होते हैं। वर्षेश पर पापग्रह की दृष्टि या पापग्रह का संयोग रहे तो गुप्त क्लेश, अल्पवृत्ति, अन्य विपदाएँ, धनक्षय आदि सभी अनिष्ट फल होते हैं। निर्बल वर्षेश शुक्र के होने से जीविका का विच्छेद, मानसिक व्यथा, लोकोपहासजन्य विपत्तियाँ, किसी तरह कष्ट से भोजनवृत्ति, पुत्र-कलत्रादि से द्वेष के कारण विकलता, किन्तु कहीं भी सुखप्राप्ति नहीं होती है।

### वर्षेशशनिफलम्

शनौ बलिनि वर्षेशे भूमिवेश्मार्थसञ्चयः ।
कुलोचितपदप्राप्तिस्तडागारामजं सुखम् ॥ ६७ ॥
यवनाधीशसम्मानमङ्गपुष्टिश्च सौख्यदा ।
मध्यवीर्ये शनौ वर्षपतौ मध्यं फलं स्मृतम् ॥ ६८ ॥
पापेक्षणयुतेऽब्देशे कृच्छ्रादन्नाशनं भवेत् ।
मन्दे हीनबले तत्रार्थक्षयो विपदोऽरिभीः ॥ ६९ ॥
स्त्रीपुत्रमित्रजनतो वैरं कष्टात्कदन्नभाक् ।
शुभग्रहेणेत्थशाले सौख्यमीषत् स्मृतं बुधैः ॥ ७० ॥

**सुधा**—वर्षेश शनि प्रबल रहें तो भूमि, गृह तथा धन प्राप्ति होवे। उसे वर्ष के भीतर ही कुलोचित पदप्राप्ति तथा तालाब, बगीचा आदि का सौख्य भी प्राप्त होता है। यवनाधीश ( राजा ) से सम्मान, सुपुष्ट अङ्ग आदि से सौख्य होते हैं। मध्यवीर्य वर्षेश शनि में समस्त फल मध्यमरूप का होवे। वर्षेश पर पापग्रह की दृष्टि या पाप का संयोग रहे तो कठिनता से उसे भोजन प्राप्त हो। हीनबल वर्षेश शनि रहें तो धनक्षय, अनेक विपदाएँ तथा शत्रु से भय प्राप्त होता है। स्त्री-पुत्र-मित्रजनों से उसे शत्रुता हो जाती है और बड़ी कठिनता से उसे भोजन प्राप्त होता है। किन्तु शुभग्रह से इत्थशाल रहने पर थोड़ा-सा सौख्य प्राप्त होता है।

### सामान्यतो ग्रहाणां वर्षेशफलानि

बलाढ्येऽब्दपतौ सर्वं फलं सौख्यप्रदं स्मृतम् ।
शुभग्रहेणेत्थशाले विशेषात्फलमुत्तमम् ॥ ७१ ॥
मध्यवीर्ये तु वर्षेशे मध्यमं सकलं फलम् ।
पापग्रहेणेशराफे मध्यान्मध्यं तु तत्स्मृतम् ॥ ७२ ॥
वर्षेशेऽल्पबले सर्वं फलं कष्टप्रदं नृणाम् ।
स्त्रीपुत्रमित्रजनितं क्लेशकृन्न शुभप्रदम् ॥ ७३ ॥

**सुधा**—सामान्य रूप से सभी ग्रहों के वर्षेशजन्य फल इस प्रकार कहना चाहिए—वर्षेश बली हों तो सभी फल सौम्यप्रद होते हैं। साथ ही शुभग्रह से वर्षेश को इत्थशाल होने पर और उत्तम फल होते हैं। मध्यवीर्य वर्षेश में सभी फल मध्याकार होते हैं। पापग्रह के साथ ईशराफ योग हो तो मध्यम से भी मध्यम फल कहना चाहिए। वर्षेश अल्पबल हो तो सभी फल कष्टकर होते हैं। स्त्री-पुत्र-मित्रजनित क्लेशकारी वे किसी भी तरह शुभकारी नहीं होते हैं। यही है सभी ग्रहों के वर्षेश फल का संक्षिप्त सारांश।

### मुथहेशफलानि

मुथहा स्वामिसत्खेटदृष्टचा सौख्यप्रदा स्मृता ।
पापक्षुतदृशा रोगभीतिदा न शुभप्रदा ॥ ७४ ॥

वर्षलग्नात् सुखास्तान्त्यरिपुरन्ध्रगताऽशुभा ।
भाग्यराज्यायगाराज्यसुखदाऽन्यत्र मध्यमा ॥ ७५ ॥

**सुधा**—मुथहा अपने स्वामी या शुभग्रह की दृष्टि से सुखप्रद होती है तथा पापग्रह की शुभदृष्टि से रोगभयकारिणी सर्वथा अशुभ होती है ।

वर्षलग्न से ४।७।१२।६।८ स्थानस्थ वह अशुभ और ९।१०।११ स्थानस्थ राज्य-सुखप्रद होती है । अन्यत्र चार स्थानस्थ वह मध्यफलद होती है ।

**द्वादशभावगतमुथहाफलानि**

लग्नगा मुथहा शत्रुक्षयकर्त्री शुभा सदा ।
राजप्रीतिकरी देहपुष्टिवित्तसुखप्रदा ॥ ७६ ॥
धनगा धनदा बन्धुसम्मानं नृपसंश्रयम् ।
बलपुष्टिसुखं मिष्टभोजनं च प्रयच्छति ॥ ७७ ॥
तृतीयस्थानगा देहवित्तकीर्त्तिसुखप्रदा ।
लोकोपकारकर्त्री च देवद्विजनृपाश्रया ॥ ७८ ॥
तुर्यगा शत्रुभीदेहपीडा स्वजनवैरदा ।
जलापवादरोगादिवृद्धिदुःखप्रदा भवेत् ॥ ७९ ॥
पञ्चमस्था तु सद्बुद्धिसुतवित्तसुखप्रदा ।
देवद्विजनृपप्रीत्या प्रतापर्धिप्रदेन्थिहा ॥ ८० ॥
षष्ठस्था शत्रुरुग्भीतिप्रदा कीर्त्त्यर्थहारिणी ।
तस्कराद्राजतश्चापि भीतिर्दुर्बुद्धिवृद्धिदा ॥ ८१ ॥

**सुधा**—लग्नस्थ मुथहा शत्रुक्षयकारिणी तथा सर्वदैव शुभप्रद, राजा से प्रेमकारिणी, शारीरिक पुष्टि तथा धनज सुखप्रद होती है । धनभावस्थ मुथहा धनदात्री, बन्धु-बान्धवों द्वारा सम्मान, राजाश्रय, बलपुष्टिवर्धक तथा प्रतिदिन मिष्टान्नभोजनदात्री होती है । तृतीयस्थानगा वह दैहिक, आर्थिक सौख्य के साथ कीर्त्तिप्रद होती है । वह देवता, ब्राह्मण, राजा के आश्रयदात्री तथा लोकोपकारकर्त्री होती है । चतुर्थस्थानगा मुथहा शत्रुभय, शारीरिक कष्ट तथा आत्मीय जनों से शत्रुता कराने वाली एवं जनापवाद, रोग आदि की वृद्धि से क्लेशकारिणी होती है । पञ्चमस्था वह सद्बुद्धि, पुत्र तथा धन सौख्यप्रद होती है । वह देवता, ब्राह्मण एवं राजा के प्रेम से प्रताप बढ़ाने वाली होती है; वही इन्थिहा भी कहलाती है । षष्ठस्थ मुथहा शत्रु-रोगजन्य भय देने वाली, धन तथा यश की विनाशक, चोर तथा राजा से भय एवं दुर्बुद्धि बढ़ाने वाली होती है ।

द्यूनगा मुथहा धर्मधनध्वंसकरी सदा ।
बन्धुस्त्रीस्ववपुःक्लेशकारिणी शत्रुभीतिदा ॥ ८२ ॥
मृतिस्था धर्मधनयोर्नाशकृद्रोगकारिणी ।
शत्रोस्तस्करतश्चापि भीतिदा व्यसनप्रदा ॥ ८३ ॥

भाग्यगा धनदा राज्ञः पुत्रस्त्रीसौख्यवर्धिनी ।
यशोदा द्विजदेवार्चा भाग्योदयकरी स्मृता ।। ८४ ।।
कर्मस्था राजसम्मानयशोवृद्धिपदाप्तिदा ।
विविधार्थप्रदा कर्मसिद्धिदा सुरभक्तिदा ।। ८५ ।।
लाभगा मुथहा राजाश्रयतो धनदा तथा ।
नैरुज्यभाग्यसन्मित्रपुत्रसौख्यप्रदा स्मृता ।। ८६ ।।
व्ययगा दुर्जनैः सङ्गकारिणी रोगकृत्तनौ ।
धर्मार्थक्षयकर्त्री चासिद्धिदा व्ययशालिनी ।। ८७ ।।

**सुधा**—सप्तमभावस्थ मुथहा सतत धर्म-धननाशक होती है । वह बन्धुगण, स्त्री तथा अपने शरीर में कष्ट देने वाली एवं शत्रुकृत भय देने वाली होती है । अष्टम स्थित मुथहा धन-धर्मनाशकर्त्री तथा रोगवर्धिनी होती है । वह शत्रु तथा चोर से भय देने वाली तथा दुर्व्यसनप्रद होती है । भाग्य( नवम )स्थ मुथहा राजा के द्वारा धनदात्री, पुत्र-स्त्रीजन्य सुख बढ़ाने वाली, यशोदात्री, देव, ब्राह्मण, पूजन तथा भाग्य बढ़ाने वाली होती है । दशमभावस्थ मुथहा राजसम्मान, यशोवृद्धि एवं स्वकुलोचित पद देने वाली होती है । वह विविध सम्पत्ति देने वाली, कार्यसिद्धिकर्त्री तथा देवभक्तिप्रदा होती है ।

लाभस्थ मुथहा राजाश्रय से धनप्रदा, नैरुज्य, भाग्य, सन्मित्र एवं पुत्रसौख्यप्रदा होती है । व्ययभावस्थ मुथहा दुर्जनों के साथ सङ्ग कराने वाली, रोगकर्त्री, धर्म-धनक्षयकर्त्री, सभी कार्यों में असिद्धिकारिणी तथा खर्चा कराने वाली होती है ।

**विशेष**—'पापदृष्टः क्षुतदृशा यो भावस्तत्र मुथहा ।
यदि तद्भावजं नश्येत् शुभं त्वशुभमेधते' ।।

जो भाव पापग्रहदृष्ट हो, उसमें यदि मुथहा रहे तो भावज शुभफल नष्ट हो जाता है और अशुभफल बढ़ता है ।

### गोचरफलविचारे जन्मराश्यादिगतसूर्यफलम्

जनूराशिस्थिते सूर्ये गमनं तु जनुर्मतः ।
द्वितीयस्थे भयं, लक्ष्मीस्तृतीयस्थेऽथ तुर्यगे ।। ८८ ।।
व्यसनं, पञ्चमस्थे तु दैन्यं शत्रुक्षयोऽरिगे ।
सप्तमस्थे तु सम्मानमष्टमस्थेऽति वेदना ।। ८९ ।।
नवमस्थे क्षयः कान्तेः सिद्धिर्दशमगे पुनः ।
एकादशस्थिते लाभो व्ययः स्याद्द्वादशस्थिते ।। ९० ।।

**सुधा**—सञ्चारवश जन्मराशि में सूर्य के आने पर गमन ( यात्रा ), जन्मराशि से दूसरे में सूर्य के आने से भय, तीसरे में आने पर लक्ष्मीप्राप्ति, चतुर्थस्थ होने पर व्यसन, पञ्चमस्थ होने पर दीनता, षष्ठस्थ होने पर शत्रुक्षय, सप्तमस्थ होने पर

सम्मान, अष्टमस्थ होने पर कष्ट, नवमस्थ होने पर कान्तिक्षय, दशमस्थ होने पर सिद्धि, एकादशस्थ में लाभ और द्वादशस्थ में व्यय होता है।

### जन्मराश्यादिगतचन्द्रस्य फलम्

जन्मराशिगते चन्द्रे भवेदुत्तमभोजनम्।
जन्मराशेर्द्वितीयस्थे क्षयोऽर्थस्य तृतीयगे॥ ९१॥
धनलाभश्चतुर्थस्थे कुक्षौ पीडा हि विश्रुता।
पञ्चमस्थे कार्यनाशो लाभः षष्ठस्थिते सति॥ ९२॥
सप्तमस्थे धनप्राप्तिरष्टमस्थे भवेद्रुजा।
राजभीर्नवमस्थे स्याद्दशमस्थे सुखं स्मृतम्।
एकादशस्थिते लाभो द्वादशस्थे शुचां भयम्॥ ९३॥

**सुधा**—जन्मराशिगत चन्द्र में उत्तम भोजन, जन्मराशि से दूसरे में चन्द्र के रहने से धनक्षय, तृतीयस्थ चन्द्र में धनलाभ, चतुर्थस्थ चन्द्र में उदरपीड़ा, पञ्चमस्थ चन्द्र में कार्यनाश, षष्ठस्थ चन्द्र में लाभ, सप्तमस्थ चन्द्र में धनप्राप्ति, अष्टमस्थ चन्द्र में रोग, नवमस्थ चन्द्र में राजभय, दशमस्थ चन्द्र में सुखद, एकादशस्थ चन्द्र में भी लाभ तथा द्वादशस्थ चन्द्र में शोकभय कहना चाहिए।

### जन्मराश्यादिगतभौमफलम्

जन्मराश्यादिगे भौमे भीतिक्षतिधनाप्तयः।
शत्रुवृद्धिः क्षयोऽर्थस्य धनाप्तिर्धनसङ्क्षयः।
शस्त्रघातोऽथ रुक्शोको लाभो व्यय इति क्रमात्॥ ९४॥

**सुधा**—जन्मराशिस्थ भौम में भय, जन्मराशि से दूसरे में मंगल के आने से क्षति, तीसरे में आने से धनलाभ, चौथे में आने से शत्रुवृद्धि, पाँचवें में आने पर अर्थक्षय, छठे में आने से धनलाभ, सातवें में आने पर धनक्षय, आठवें में आने पर शस्त्रघात, नवें में आने पर रोग, दशवें में होने से शोक, ग्यारहवें में होने पर लाभ और बारहवें में होने से अपव्यय होता है।

### जन्मराश्यादिगतबुधफलम्

जन्मराश्यादिगे सौम्ये बन्धनं सुधनं ततः।
शत्रुभीरर्थसम्प्राप्तिर्देहे पीडा स्थितिः क्रमात्॥ ९५॥
पीडनं धनसम्प्राप्तिः खिन्नता सौख्यमुत्तमम्।
धनमेकादशस्थे तु व्ययस्थे धनसङ्क्षयः॥ ९६॥

**सुधा**—जन्मराशि तथा जन्मराशि से दूसरे, तीसरे आदि बुध में क्रमशः बन्धन, सुधन, शत्रुभय, धनप्राप्ति, शारीरिक पीड़ा, स्थैर्य, पीड़ा, धनप्राप्ति, खिन्नता, उत्तमसुख, धनलाभ तथा द्वादशस्थ बुध में धनक्षय—ये फल होते हैं।

### जन्मराश्यादिगतगुरुफलम्

जन्मराशिस्थिते जीवे भयं तस्माद् द्वितीयगे ।
धनाप्तिस्तत्तृतीयादौ पीडनं शत्रुवर्धनम् ।। ९७ ।।
सौख्यं शोको राजमानं रोगः सौख्यं च दीनता ।
एकादशस्थे सम्मानं व्ययस्थे दन्तपीडनम् ।। ९८ ।।

**सुधा**—जन्मराशिगत गुरु में भय, जन्मराशि से दूसरे में यदि गुरु हों तो धनप्राप्ति, तीसरे में पीड़ा, चौथे में गुरु के आने से शत्रुवृद्धि, पाँचवें में सुख, छठे में आने पर शोक, सप्तमस्थ गुरु में राजसम्मान, अष्टमस्थ गुरु में रोग, नवमस्थ गुरु में सौख्य, दशमस्थ गुरु हों तो दैन्य, एकादशस्थ में सम्मान तथा द्वादशस्थ गुरु में दाँत में पीड़ा—ये जन्मराश्यादिगत गुरु में क्रमशः फल होते हैं ।

### जन्मराश्यादिगतशुक्रफलम्

जन्मराशिगते शुक्रे शत्रुक्षय उदीरितः ।
द्वितीयादौ धनप्राप्तिः सौख्यं वित्तं तथात्मजे ।। ९९ ।।
प्रीतिर्वृद्धिश्च शत्रूणां शोकोऽर्थाप्तिः सुवस्त्रजा ।
सुखं पीडा धनप्राप्तिः धनाप्तिः क्रमशः फलम् ।। १०० ।।

**सुधा**—जन्मराशिगत शुक्र का फल शत्रुक्षय कहा गया है । द्वितीयादि में अर्थात् जन्मराशि से दूसरे में धनप्राप्ति, तीसरे में सुख, चौथे में धनलाभ, पाँचवें में पुत्रप्रेम, छठे में शत्रुवृद्धि, सातवें में शोक, आठवें में धनप्राप्ति, नवें में वस्त्रज सुख, दशवें में पीड़ा, ग्यारहवें तथा बारहवें में धनलाभ—क्रमशः ये फल हैं ।

### जन्मराश्यादिगतशनिफलम्

जनूराशिस्थिते मन्दे बुद्धिभ्रंशो द्वितीयगे ।
क्लेशस्तृतीयगे सौख्यं, शत्रुवृद्धिश्चतुर्थगे ।। १०१ ।।
पञ्चमस्थे जनूराशेः पुत्रात्कष्टं तु षष्ठगे ।
सौख्यवृद्धिः सप्तमस्थे दोषः पीडाऽष्टमे स्थिते ।। १०२ ।।
हानिर्नवमगे ज्ञेया दारिद्र्यं दशमस्थिते ।
एकादशगतेऽर्थाप्तिर्नानाऽनर्थो व्ययस्थिते ।। १०३ ।।
व्ययादित्रितये मन्दे सार्धसप्तमिताब्दके ।
नानाकष्टं कायजातं मानसञ्चातिदारुणम् ।। १०४ ।।

**सुधा**—जन्मराशिगत शनि में बुद्धिभ्रंश, जन्मराशि से दूसरे में शनि के रहने से क्लेश, तीसरे में रहने पर सुख, चौथे में रहने पर शत्रुवृद्धि, पञ्चम में होने पर पुत्र द्वारा कष्ट, षष्ठस्थ शनि में सुखसमृद्धि, सप्तमस्थ शनि में दोष, अष्टमगत शनि में

शारीरिक या मानसिक पीड़ा, नवमगत शनि में क्षति, दशमस्थ शनि में निर्धनता, ग्यारहवें शनि में अर्थप्राप्ति तथा व्ययगत शनि में अनेकविध अनर्थकर होते हैं।

व्ययादि त्रितय अर्थात् बारहवें, जन्मराशि तथा जन्मराशि से दूसरे—इन तीनों में शनि के रहने से साढ़ेसाती शनि कहलाते हैं। चूँकि शनि एक राशि में ढाई वर्ष रहते हैं अतः तीनों राशि में साढ़े सात वर्ष रहने के कारण ही साढ़े साती शनि कहलाते हैं। साढ़े साती शनि में शारीरिक एवं मानसिक अनेकविध कष्ट होते हैं।

### जन्मराश्यादिगततमोग्रहफलम्

जन्मराश्यादिगे राहौ केतौ वा क्रमशः फलम्।
हानिर्नैःस्वं धनप्राप्तिः वैरं शोको धनार्जनम्॥ १०५॥
वादः पीडा पापवृद्धिर्वैरं सौख्यं धनक्षयः।
इत्येवं जन्मराशेस्तु राहौ द्वादशराशिगे।
केतौ वा विबुधैः प्रोक्तं फलं गोचरसम्भवम्॥ १०६॥

**सुधा**—जन्मराश्यादि द्वादशराशिगत राहु अथवा केतु में निम्नाङ्कित फल होते हैं—

जन्मराशिगत तमोग्रह में हानि, जन्मराशि से दूसरे में तमोग्रह के रहने से दरिद्रता, तीसरे में रहने से धनप्राप्ति, चौथे में रहने पर शत्रुता, पाँचवें में रहने से शोक, छठे में रहने पर धनोपार्जन, सप्तम में रहने से कलह, आठवें में रहने से पीड़ा, नवम में रहने पर पापवृद्धि, दशवें में रहने पर वैर, ग्यारहवें में रहने से सौख्य तथा बारहवें में रहने से धनक्षय—ये फल होते हैं।

इस तरह जन्मराशि से बारहों राशिगत तमोग्रह के रहने से उपर्युक्त फल गोचर-फल कहलाता है।

मारकेशद्वयदृशा सन्नद्धान्यतरान्तरैः।
किं वाष्टमेशजाभुक्तिर्मारकान्तरसंश्रिता॥ १०७॥
अथवा तद्द्वयदशा शनिराह्वन्तराश्रिता।
त्रिषडायेशसम्बद्धा वापि नैव शुभप्रदा॥ १०८॥
तत्तद्दुर्ग्रहभुक्तौ वा गोचरेणापि दुःस्थितौ।
ग्रहाणां मन्त्रजापं तु चतुर्गुणितसंख्यकम्॥ १०९॥
तत्तद्ग्रहोक्तरत्नानां धारणं च शुभप्रदम्।
दानीयवस्तु दानं च कारयेन्नियतं बुधः॥ ११०॥

**सुधा**—दोनों मारकेश की दशा में अन्यतर मारकेश की अन्तर्दशा प्राप्त हो या अष्टमेश की दशा में मारकेश की अन्तर्दशा प्राप्त हो या उन दोनों की महादशा में शनि-राहु की अन्तर्दशा आवे या त्रिषडायेश की महादशा में उपर्युक्त असद्ग्रह की अन्तर्दशा या उन मारकेशादि असद्ग्रह की महादशा में त्रिषडायेश की अन्तर्दशा शुभ-प्रद नहीं होती है।

दुर्ग्रह की महादशा तथा अन्तर्दशा एवम् गोचर विचार से भी दुःस्थिति रहने पर दुर्ग्रहों के मन्त्रजप ( चतुर्गुणित संख्या में ) तथा तत्तद् ग्रहों का रत्नधारण शुभप्रद होता है। इसके अतिरिक्त तत्तद् ग्रहों के लिए दानीय वस्तुओं का दान करा देना चाहिए।

### ग्रहाणां रत्नानि तद्धारणविधिश्च

रवे रत्नं तु माणिक्यं मौक्तिकं शशिनस्तथा।
विद्रुमं भूमिजातस्य बौधं मरकतं स्मृतम् ॥ १११ ॥
पुष्परागो गुरोः शौक्रं वज्रं नीलं शनेर्मतम्।
राहोर्गोमेदकं प्रोक्तं केतोर्वैदूर्यमुच्यते।
इमानि ग्रहरत्नानि ग्रहशान्त्यै हि धारयेत् ॥ ११२ ॥

**सुधा०**—सूर्यादि नवग्रहों के निम्नाङ्कित रत्न हैं—

सूर्य के माणिक्य, चन्द्रमा के मोती, मंगल के मूँगा, बुध के मरकतमणि, गुरु के पुष्पराग ( पुखराज ), शुक्र के वज्र, शनि के नीलमणि, राहु के गोमेद तथा केतु के वैदूर्य हैं।

माणिक्यं विद्रुमं वापि रवेर्दुष्टत्वशान्तये।
सुवर्णग्रथितं कृत्वाऽनामिकायां हि धारयेत् ॥ ११३ ॥
कनिष्ठिकायां सन्धार्यं मौक्तिकं वेन्दुप्रस्तरम्।
राजतग्रथितं विज्ञैर्विधोर्दौष्ट्यप्रशान्तये ॥ ११४ ॥
प्रवालं ताम्रमथवा सौवर्णे राजतेऽपि वा।
निबध्याऽनामिकायां तु धार्यं भौमप्रशान्तये ॥ ११५ ॥
बौधं रत्नं मरकतं पन्नाख्यं वापि मार्गजम्।
कनिष्ठिकायां सन्धार्यं सुवर्णग्रथितं च सत् ॥ ११६ ॥
पुष्परागो गुरो रत्नं टौपेजं वापि विश्रुतम्।
सुवर्णग्रथितं कृत्वा तर्जन्यां परिधापयेत् ॥ ११७ ॥
शौक्रं वज्रं हीरकं वा स्फटिकं रत्नमीरितम्।
रजतग्रथितं तत्तु मध्याङ्गुल्यां हि धारयेत् ॥ ११८ ॥
शनेर्नीलं विकल्पे तु लौहं किं वा जमूनिया।
राहो रत्नं तु गोमेदं, केतोर्वैदूर्यमेव च ॥ ११९ ॥
लाजावर्त्तं विकल्पेन, सन्धार्यं मध्यमाङ्गुलौ।
नीलं सुवर्णसन्नद्धमन्यद्रजतसंश्रितम् ॥ १२० ॥
शने राहोस्तथा केतोर्मन्देऽह्नि परिधापयेत्।
अन्यानि ग्रहरत्नानि तत्तद्ग्रहदिनागमे।
पञ्चोपचारैः सम्पूज्य धारयेच्छुभदायकम् ॥ १२१ ॥

**सुधा**—सूर्य यदि गोचर-विचार से प्रतिकूल रहें तो उनकी दुष्टता ( प्रतिकूलता ) की शान्ति के लिए माणिक्य या विद्रुम सुवर्ण में मढ़कर अनामिका में धारण करना चाहिए ।

चन्द्रमा यदि गोचरदृष्टि से प्रतिकूल रहें तो मोती या चन्द्रप्रस्तर ( Moonstone ) चाँदी में मढ़कर कनिष्ठ अङ्गुलि में धारण करें, जिससे उनकी दुष्टता ( प्रतिकूलता ) शान्त हो जाय ।

मंगल यदि गोचरदृष्टि से प्रतिकूल रहें तो मूँगा सोना या चाँदी में मढ़कर अथवा ताँबा अनामिका में धारण करें, जिससे मंगल की प्रतिकूलता शान्त हो जाती है ।

बुध यदि गोचर-विचार से प्रतिकूल रहे तो मरकतमणि या पन्ना या आजकल प्रचलित मर्गज नामक प्रस्तर सोना में मढ़कर कनिष्ठ अङ्गुलि में पहन लें ।

पुखराज ( पीला ) गुरु का रत्न है । आजकल विकल्प में टौपेज भी प्रचलित है । उन्हें सोने में मढ़कर तर्जनी ( अंगुष्ठ तथा मध्य अंगुलि के मध्यवर्त्ती ) में पहनावें ।

शुक्र का रत्न वज्र, हीरा एवं स्फटिक प्रशस्त हैं । इसमें से किसी को भी चाँदी में मढ़कर मध्याङ्गुलि में धारण करें, जिससे शुक्रजन्य दोष की शान्ति हो जाती है ।

शनि का रत्न नीलमणि है, विकल्प में आजकल प्रचलित जमूनिया या लोहा ( काला घोड़ा के नाल से अथवा दगनी वाले लोहे से निर्मित अंगुठी ) प्रशस्त है । नील सुवर्ण में मढ़कर जमूनिया चाँदी में मढ़कर मध्याङ्गुलि में शनिशान्त्यर्थ धारण करें ।

राहु का रत्न गोमेद, केतु का वैदूर्य, विकल्प में लाजावर्त्त मध्यमाङ्गुलि में राहु-केतु-दोषशान्त्यर्थ धारण करें ।

**विशेष**—नील, माणिक्य, पुखराज तथा पन्ना सुवर्ण में; अन्य सभी चाँदी में मढ़कर उस-उस अंगुलि में ग्रहों के दिन में रत्नों का पञ्चोपचार पूजन के बाद धारण करना चाहिए । राहु-केतु का रत्न शनिवार में ही धारण करें ।

### शिववासविचारस्तत्फलञ्च

शुक्लादितिथयो द्वाभ्यां गुणिताः पञ्चभिर्युताः ।
सप्तभिश्च हृताः शेषैः शिववासमुदीरयेत् ।। १२२ ।।
एकद्वित्रिमिते शेषे कैलाशे गौरिसन्निधौ ।
वृषभे च समारूढः शिवोऽभीष्टफलप्रदः ।। १२३ ।।
चतुःपञ्चमिते शेषे सभायां भोजने क्रमात् ।
क्रीडायां षड्मिते सप्तमिते शम्भुः स्मशानगः ।। १२४ ।।
क्रीडा सभाभोजनेषु स्थितः शम्भुर्न शोभनः ।
स्मशानगस्तु विबुधैर्मृत्युदः स उदीरितः ।
तस्मात् शिवस्थितिं ज्ञात्वा तदनुष्ठानमाचरेत् ।। १२५ ।।

**सुधा**—शुक्लादि तिथिसंख्या को दो से गुणा कर गुणनफल में पाँच जोड़ दें; योगफल में सात से भाग दें; एक, दो तथा तीन शेष में क्रमशः कैलाश गौरी के निकट तथा वृषभारूढ शिव को समझें। इन तीनों स्थानों में स्थित शिव सर्वाभीष्ट-प्रद होते हैं। अर्थात् पार्थिवशिवलिङ्गपूजन या किसी अन्य शिवानुष्ठान में उपर्युक्त रीति से आगत एक-द्वि-त्रि शेष में ही शिवार्चन या मृत्युञ्जयादि जपारम्भ करें।

उपर्युक्त रीति से क्रिया करने पर चार, पाँच, छः शेष में क्रमशः सभा, भोजन तथा क्रीडारत रहते हैं और सात में श्मशानस्थ होने के कारण सर्वथा अनिष्टकर होते हैं। श्मशानस्थ शिव में शिवार्चनादि आरम्भ करने पर मृत्युप्रद कहे गये हैं। अन्य भी सभा, भोजन, क्रीड़ा-रतावस्था में वे अनिष्टकर कहे गये हैं। अतः शिवाराधनारम्भ के समय उपर्युक्त रीति से एक, दो, तीन शेष में ही कल्याणप्रद शिव होते हैं।

### वह्निवासविचारस्तत्फलञ्च

सैकाः शुक्लादितिथयो रव्यादिदिवसान्विताः।
चतुर्भिर्विहृताः शून्ये गुणे वा शेषकेऽनलः॥ १२६॥
भूस्थितो ह्येकयुग्मे तु शेषके दिवि भूतले।
भूस्थितोऽग्निः सदा सौख्यकृद्भवेद्धवनादिके॥ १२७॥
प्राणार्थक्षयकृज्ज्ञेयो दिवि भूमितले स्थितः।

**सुधा**—शुक्लादि तिथिसंख्या में एक जोड़कर पुनः सूर्यादि दिनसंख्या जोड़ दें, योगफल में चार से भाग दें, शून्य तथा तीन शेष में अग्निदेव भूमिस्थित होते हैं। एक शेष में आकाशस्थ और दो शेष में पातालगत होते हैं। भूमिस्थ अग्निदेव हवनादि में सर्वथा सौख्यकारी होते हैं और आकाश तथा पातालस्थ अग्निदेव में हवनादि क्रिया करने पर क्रमशः वे प्राण तथा अर्थ के विध्वंसक होते हैं।

अतः हवनादि क्रिया करते समय अग्निवास देखकर ही आरम्भ करना चाहिए।

### चन्द्रादीनां कालांशकथनम्

सूर्याः सप्तभुवो वह्निभुवश्चन्द्रेन्दवो नवाः॥ १२८॥
तिथयः क्रमशश्चन्द्राद् विज्ञैः काललवाः स्मृताः।
बुधभार्गवयोरेकहीनास्ते वक्रिणो मताः॥ १२९॥

**सुधा**—१२, १७, १३, ११, ९, १५ ये क्रमशः चन्द्रादि षड्ग्रहों के कालांश हैं। वक्री बुध-शुक्र के कालांश एकोन उपर्युक्त कालांश अर्थात् बुध के १२ तथा शुक्र के ८ हैं।

**विशेष**—कालांश का तात्पर्य है कि सूर्य से उपर्युक्त अन्तरांशों के दायरे में तत्तद् ग्रहों के रहने से सूर्यकिरणों से विलुप्त किरण होने के कारण ग्रहों की अदृश्यता और आगे होने पर दृश्यता समझनी चाहिए। जैसे चन्द्रमा सूर्य से १२ अंश के भीतर रहने पर अदृश्य, उसके बाद आगे होने पर दृश्य होते हैं।

## अथ प्रश्नविचाराध्यायः

### तत्र लग्नसूर्यचन्द्रवशेन कार्यसिद्ध्यसिद्धिज्ञानम्

चरे लग्ने चरे सूर्ये चरे शशिनि संस्थिते (१)।
चरे लग्ने चरे चन्द्रे सूर्ये तु स्थिरराशिगे (२)॥ १३०॥
चरे लग्ने स्थिरे सूर्ये द्विस्वभावगते विधौ (३)।
प्रश्नक्षणो यदि भवेत्तदा सिद्धिः सुनिश्चिता।
उक्तत्रिस्थितिभिन्ने तु चरलग्ने न सा स्मृता॥ १३१॥

**सुधा**—चरलग्न, चरराशिगत सूर्य एवं चरराशिस्थ चन्द्र में यदि प्रश्नकाल हो अर्थात् प्रश्नक्षण में लग्न, सूर्य तथा चन्द्र तीनों चरराशिस्थ हों तो निश्चयतः कार्य-सिद्धि होती है।

इसी तरह चरलग्न, चरराशिस्थ चन्द्र एवं स्थिरराशिगत सूर्य यदि प्रश्नकाल में हों तो भी कार्यसिद्धि होती है।

तीसरी स्थिति चरलग्न, स्थिरराशिगत सूर्य और द्विस्वभावराशिस्थ चन्द्र हों तो भी कार्यसिद्धि कहना चाहिए।

उपर्युक्त तीनों स्थितियों के अतिरिक्त स्थिति में चरलग्नगत प्रश्नकाल होने पर कार्य की असिद्धि कहें।

एवं स्थिरे तनौ सूर्ये चन्द्रे च चरराशिगे (१)।
स्थिरे लग्ने स्थिरे सूर्ये चन्द्रेऽपि स्थिरराशिगे (२)॥ १३२॥
स्थिरे लग्ने स्थिरे सूर्ये द्विस्वभावगते विधौ (३)।
स्थिरे लग्ने चरे सूर्ये चरराशौ स्थिते विधौ (४)॥ १३३॥
स्थिरे लग्ने स्थिरे चन्द्रे द्विस्वभावगते रवौ (५)।
स्थिरे लग्ने रवौ चन्द्रे द्विस्वभावगते सति (६)॥ १३४॥
प्रश्नक्षणः सदा सर्वकार्यसाधक ईरितः।
उक्तस्थितिविभिन्नेषु स्थिरलग्नेन्दुभानुषु।
कार्यसिद्धिर्न वक्तव्याऽनिष्टं च फलमादिशेत्॥ १३५॥

**सुधा**—( १ ) स्थिरलग्न, चरराशिगत सूर्य-चन्द्र; ( २ ) स्थिरलग्न, स्थिर-राशिस्थ सूर्य तथा चन्द्र; ( ३ ) स्थिरलग्न, स्थिरराशिस्थ सूर्य और द्विस्वभावगत चन्द्र; ( ४ ) स्थिरलग्न, चरराशिगत सूर्य तथा चन्द्र; ( ५ ) स्थिरलग्न, स्थिरचन्द्र एवं द्विस्वभावगत सूर्य तथा ( ६ ) स्थिर लग्न और सूर्य तथा चन्द्र द्विस्वभावगत—इन छः स्थितियों में यदि प्रश्नक्षण हों तो सर्वकार्यसिद्धि कहना चाहिए। अन्यथा

उपर्युक्त षड्विध स्थिति से भिन्न परिस्थिति में यदि प्रश्नकाल हों अर्थात् स्थिरलग्न तथा चर-स्थिर-द्विस्वभावगत सूर्य-चन्द्र में कार्य की असिद्धि ही नहीं प्रत्युत अनिष्ट भी होता है।

द्विदेहगतलग्नेषु चन्द्रेऽर्केऽपि च तद्गते।
किं वा द्विदेहगतनौ द्विदेहेऽर्के चरे विधौ ॥ १३६ ॥
द्विस्वभावगते लग्ने स्थिरेऽर्के चरगे विधौ।
किं वा द्विदेहगतनौ स्थिरेऽर्केऽपि च शीतगौ ॥ १३७ ॥
द्विस्वभावगते लग्ने चरे सूर्ये स्थिरे विधौ।
किं वा तनौ द्विदेहस्थे चरेऽर्के द्विस्वभे विधौ ॥ १३८ ॥
एषु सर्वेषु योगेषु कार्यसिद्धिः सुनिश्चिता।
एभ्यो भिन्नस्थितौ नैव संसिद्धिं लभते नरः ॥ १३९ ॥

सुधा—( १ ) द्विस्वभावराशिगत लग्नों में चन्द्रमा एवं सूर्य दोनों यदि द्विस्वभाव-राशिस्थ हों; ( २ ) किंवा द्विस्वभावस्थ लग्न, द्विस्वभावस्थ सूर्य और चरराशिगत चन्द्र हों; ( ३ ) अथवा द्विस्वभावराशिस्थ लग्न, स्थिरराशिगत सूर्य और चरराशिगत चन्द्र हों; ( ४ ) किंवा द्विस्वभावराशि के लग्न में स्थिरराशिस्थ चन्द्र-सूर्य दोनों हों; ( ५ ) या द्विस्वभावराशिगत लग्न में चरराशिस्थ सूर्य और स्थिरराशिस्थ चन्द्र हों; ( ६ ) अथवा द्विस्वभावराशिगत लग्न, चरराशिस्थ सूर्य एवं द्विस्वभावराशिस्थ चन्द्र हों—इन सभी उपर्युक्त परिस्थितियों में यदि प्रश्नकर्त्ता प्रश्नों का फलाफल जानना चाहें तो उसकी सर्वथा कार्यसिद्धि सुनिश्चित है। इनसे विभिन्न स्थिति में अर्थात् द्विस्व-भावलग्न तथा चन्द्र-सूर्य के चर-स्थिर-द्विस्वभावगत राशि में कार्यसिद्धि नहीं होती है—ऐसा विद्वानों का कहना है।

**पथिकगमनागमनप्रश्नविचारः**

प्रश्नलग्नात् सुखे खे वा सौम्यखेटो भवेत्तदा।
गन्तुर्न गमनं तर्हि भवेदिति बुधा जगुः ॥ १४० ॥
पापा यदि गतास्तत्रागन्तुर्नागमनं तदा।
चतुर्थाद्दशमाद्खेटो द्वितीयेऽभ्येति यावता ॥ १४१ ॥
कालेन तावता ज्ञेयं पथिकागमनं बुधैः।
सप्तमस्थो यदा चन्द्रोऽथवा नवमभावपः ॥ १४२ ॥
राश्यर्धात् परतस्तर्हि पथिकः पथि वर्त्तते।
सुखे जीवोऽथवा चन्द्रो भार्गवो वापि संस्थितः ॥ १४३ ॥
शीघ्रमेवागतं विद्यात्पथिकं प्रश्नवित्तदा।
प्रश्नलग्नात् द्वितीये वा तृतीये गुरुभार्गवौ ॥ १४४ ॥
तदापि त्वरितं विद्यात् पथिकं गृहमागतम्।
षष्ठे वा सप्तमे चन्द्रलग्नपौ संयुतौ यदि ॥ १४५ ॥

रन्ध्रनाथेन कुरुतो मृत्युं हि पाथिकस्य वै।
पृष्ठोदये प्रश्नलग्ने सौम्याऽदृष्टे खलेक्षिते।
परदेशी क्लेशयुक्तः पापैर्वा केन्द्रगैरपि ।। १४६ ।।

**सुधा**—पथिक के गमनागमनसम्बद्ध प्रश्न में प्रश्नलग्न से चतुर्थ या दशम में शुभग्रह हों तो परदेशगन्तुक का गमन अवरुद्ध हो जाय—ऐसा विद्वानों ने कहा है। उन चौथे या दशवें स्थान में यदि पापग्रह हों तो आगन्तुक का आगमन रुक जाता है। चौथे या दशवें से जितने समय में ग्रह पाँचवें या ग्यारहवें स्थान में आवे उतने दिनों में पथिक का आगमन कहना चाहिए। यदि चन्द्रमा सप्तमस्थ हों या नवमेश राशि के उत्तरार्ध में हों तो पथिक रास्ते में है, ऐसा समझना चाहिए। चतुर्थ में गुरु, चन्द्रमा या शुक्र यदि रहें तो प्रश्नवेत्ता शीघ्र ही पथिक को आगत समझें। प्रश्नलग्न से दूसरे या तीसरे में गुरु-शुक्र विद्यमान हों तो भी शीघ्र ही पथिक को आगत समझें। चन्द्रमा तथा लग्नेश षष्ठ या सप्तम में अष्टमेश के साथ हों तो पथिक का मरण कहना चाहिए। पृष्ठोदय ( १।२।४।९।१० ) यदि प्रश्नलग्न हो, उस पर शुभग्रह का दृष्टयभाव तथा पापग्रह की पूर्णदृष्टि रहे तो पथिक क्लेशयुक्त है, ऐसा समझना चाहिए। पापग्रह केन्द्रगत रहें तो भी उसे क्लेशयुक्त जानना चाहिए।

### पथिकादिगमागमयोगौ

प्रश्नकाले स्थिरे लग्ने स्यातां नैव गमागमौ।
चरे तद्व्यत्ययं विद्यात् द्विस्वभावे तु मिश्रता ।। १४७ ।।

**सुधा**—प्रश्नकाल में यदि स्थिरलग्न हो तो आगन्तुक का गमनागमन अवरुद्ध रहता है। चरलग्न में गमनागमन चालू और द्विस्वभावलग्न में उभय अर्थात् पूर्वार्ध में स्थिरराशिवत् और उत्तरार्ध में चरराशिवत् फल समझना चाहिए।

### अथाऽन्यथाऽऽगन्तुकस्यागमनप्रश्नविचारः

नवकोष्ठमिते चक्रे न्यसेदङ्कान् नवावधि।
प्रश्नकर्त्ता निजाङ्गुल्या स्पृशेदेकं निजेच्छया ।। १४८ ।।
वसुयुग्ममिते स्पृष्टे नायात्यागन्तुकस्तथा।
षड्वेदाभ्यां समागन्ता त्रिसप्तभ्यां तु पत्रदः।
शेषैस्त्रिभिः पञ्चनन्दभूमितैः शीघ्रमाव्रजेत् ।। १४९ ।।

**सुधा**—किसी आगन्तुक के आगमनसम्बद्ध प्रश्न के लिए नवकोष्ठमित चक्र का विन्यास करें। उसमें एक से नौ तक अङ्कों को विन्यस्त कर प्रश्नकर्त्ता के द्वारा इच्छानुसार किसी एक अङ्क का स्पर्श करावें। यदि प्रश्नकर्त्ता २ या ८ अङ्क को छूवें ( स्पर्श करें ) तो आगन्तुक अभी आने वाला नहीं है—ऐसा समझें। यदि वह ६ या ४ अङ्कों को स्पर्श करें तो उसे आने वाला समझना चाहिए। यदि तीन या सात अङ्क

को छूवें तो आगन्तुक पत्र देकर कुशलादि की जानकारी कराता है। शेष तीन अङ्क ५, ९, १ के स्पर्श करने पर आगन्तुक शीघ्र आवें, ऐसा समझना चाहिए।

**सन्तानसम्बद्धप्रश्नविचारः**

वामस्त्रिघ्नस्तिथियुतो द्विभक्तः शेषमानयेत्।
सन्ततिः सम्भवेदेकशेषे, शून्ये विसम्भवा ॥ १५० ॥

**सुधा**—रव्यादि दिनसंख्या को तीन से गुणा कर गुणनफल में शुक्लादि तिथि-संख्या जोड़ दें। योगफल में दो से भाग देने पर एक शेष में सन्तान की संभावना समझें, अन्यथा अर्थात् शून्य शेष में सन्तान की सम्भावना नहीं कहना चाहिए।

जैसा कि शुक्लपक्ष की दशमी तिथि और रविवार को सन्तान सम्बन्धी प्रश्न किसी ने किया है तो उपर्युक्त नियमानुसार १ × ३ = ३; ३ + १० = १३; १३ ÷ २ लब्धि = ६ शेष = १, अतः सन्तान का होना सम्भव है। शून्य शेष में अर्थात् पूरा-पूरा दो से भाग लग जाने पर सन्तान की सम्भावना नहीं सम्भव है।

**सन्ततिसम्बद्धप्रश्नविचारः**

वहन्ती पिङ्गलाप्रश्नक्षणे नाडी विशेषतः।
पुत्रदा वहमानेडा ज्ञेया कन्याप्रदा बुधैः ॥ १५१ ॥
पञ्चमेशस्तथा प्रश्नलग्नेशो नरराशिगौ।
पुत्रोत्पत्तिकरौ, कन्याप्रदौ स्त्रीराशिगौ हि तौ ॥ १५२ ॥
शनिर्विषमराशिस्थो विषमांशगतोऽपि वा।
पुत्रोत्पत्तिकरस्तद्वत् समभेंऽशे सुताप्रदः ॥ १५३ ॥
विषमेऽर्को गुरुश्चन्द्रः पुत्रोत्पत्तिकरस्तथा।
सुते शुक्रेन्दुभौमानां दृष्टिश्चापि सुतप्रदा ॥ १५४ ॥
भार्गवेन्दू पञ्चमस्थौ कन्याजन्मकरौ तथा।
बलिनौ पञ्चमस्थानं पश्यतस्तर्हि पुत्रदौ ॥ १५५ ॥
बलिनौ प्रश्नलग्नाच्चेल्लाभगावपि पुत्रदौ।
नीचास्तारिगतौ तौ तु ज्ञेयौ सन्ततिबाधकौ ॥ १५६ ॥

**सुधा**—प्रश्नकाल में यदि पिङ्गला ( दक्षिणा ) नाड़ी विशेषरूप से चलती रहे तो पुत्र और इड़ा ( वामा ) नाड़ी विशेष रूप में चलती हो तो कन्या का जन्म कहना चाहिए।

पञ्चमेश तथा प्रश्नलग्नेश दोनों पुरुषराशिस्थ हों तो पुत्र की एवं स्त्रीराशिगत हों तो कन्या की उत्पत्ति कहना चाहिए।

शनि विषमराशि या विषमराशि के नवांशगत हों तो पुत्रोत्पत्तिकारक होते हैं और वे ही समराशि या समराशि के नवांशस्थ होने पर कन्याप्रद होते हैं।

प्रश्नकाल में सूर्य, गुरु, चन्द्र विषमराशिस्थ होने पर पुत्रजन्मप्रद होते हैं। पञ्चमभाव पर शुक्र, चन्द्रमा और मंगल की दृष्टि भी पुत्रोत्पत्तिकारक होती है।

प्रश्नक्षण में शुक्र, चन्द्रमा पञ्चमस्थ हों तो कन्या जन्मकारी होते हैं और बली वे दोनों यदि पञ्चमभाव को देखते हों तो पुत्रप्रद होते हैं।

प्रश्नक्षण में बली वे ( शुक्र-चन्द्रमा ) प्रश्नलग्न से एकादशभावगत हों तो पुत्रप्रद और वे यदि नीचराशि या सूर्यसान्निध्य से अस्त या षष्ठगत हो तो सन्तानबाधक होते हैं।

### सन्ततिसम्बद्धप्रश्ने योगान्तरमाह

पञ्चमेशस्तनौ लग्नपतिः पञ्चमगस्तथा।
बलिना शशिना युक्तस्तदा पुत्रो न संशयः ॥ १५७ ॥
प्रश्नक्षणेऽङ्गपुत्रेशौ भवतो हि निजोच्चगौ।
दृष्टिः परस्परमपि तदा पुत्रो न संशयः ॥ १५८ ॥
प्रश्नक्षणे पञ्चमेशो राहुणा वा कुजेन वा।
युक्तस्तदाऽपत्यहानिरित्युक्तं पूर्वसूरिभिः ॥ १५९ ॥

**सुधा**—प्रश्नक्षण में पञ्चमेश लग्न में और प्रश्नलग्नेश पञ्चम में स्थित हों तथा प्रबल चन्द्रमा से युक्त हों तो निःसंदेह पुत्रोत्पत्ति होवे।

प्रश्नकाल में प्रश्नलग्नेश एवं पञ्चमेश दोनों अपने-अपने उच्चस्थ हों और दोनों में पारस्परिक दृष्टि भी रहे तो भी निःसंशय पुत्रजन्म कहना चाहिए।

प्रश्नक्षण में पञ्चमेश राहु या मंगलयुक्त हों तो सन्तान की हानि होती है, जैसा कि प्राचीन विद्वानों का मत है।

### मानसिकप्रश्नोत्तरविचारः

मेषलग्ने द्विपच्चिन्ता वृषभे तु चतुष्पदाम्।
मिथुने गर्भजनिता कर्कटे व्यवसायजा ॥ १६० ॥
सिंहे जीवभवा ज्ञेया कन्यायां स्त्रीसमुद्भवा।
तुलायां धनचिन्ता स्यात् वृश्चिके व्याधिसम्भवा ॥ १६१ ॥
धनुर्लग्नेऽपि धनजा मकरे शत्रुसम्भवा।
कुम्भे स्थानभवा ज्ञेया मीने सा दैवकी मता ॥ १६२ ॥

**सुधा**—प्रश्नक्षण में मेषलग्न रहने से द्विपाद मनुष्य-विषयिक चिन्ता, वृषलग्न में पशु( चतुष्पाद )चिन्ता, मिथुनलग्न में गर्भ-विषयक चिन्ता, कर्कलग्न में व्यवसाय की चिन्ता, सिंहलग्न रहने पर जीवचिन्ता, कन्यालग्न में स्त्रीसम्बद्ध चिन्ता समझना चाहिए। तुलालग्न में धन-विषयिक चिन्ता, वृश्चिकलग्न में रोगसम्बद्ध चिन्ता, धनुलग्न रहने पर भी धनचिन्ता, मकरलग्न में शत्रुजन्य चिन्ता, कुम्भलग्न में घर की चिन्ता और मीनलग्न में दैवी चिन्ता ( प्रश्न ) समझें।

### आकाशे रविचन्द्रबिम्बे परितः परिवेषे फलम्

प्रथमप्रहरे सूर्यचन्द्रयोर्बिम्बमण्डले ।
परितः परिवेषे तु जनपीडा प्रजायते ।। १६३ ।।
परिवेषे मध्ययामे वृष्टिः स्यात्सुखदायिनी ।
तृतीये प्रहरे तत्र शस्यनाशोऽपि निश्चितः ।
चतुर्थे प्रहरे तस्मिन् राज्यध्वंस उदीरितः ।। १६४ ।।

**सुधा**—सूर्य-चन्द्रमा के बिम्बमण्डल में चतुर्दिक् वृत्ताकार परिवेष यदि प्रथम प्रहर में दीख पड़े तो जनता पीड़ित होती है। दूसरे प्रहर अर्थात् मध्ययाम में वह परिवेष आकाश में दीख पड़े तो सौख्यप्रद वृष्टि होती है। तृतीय प्रहर में यदि वह परिवेष लक्षित हो तो धान्यक्षय होता है। चतुर्थ प्रहर में उसे देखा जाय तो राज या राज्य भङ्ग होता है।

### असमये इन्द्रधनुरुल्कापाताद्युत्पातफलम्

यदीन्द्रधनुषो रात्रौ धूम्रकेतोस्तथोद्गमः ।
भूमिकम्पोऽपि नियतं राष्ट्रध्वंसकरः स्मृतः ।। १६५ ।।
दिने तूल्का प्रपतनमथवा तारकोदयः ।
देशक्षयकराणीति लक्षणानि स्फुटानि वै ।। १६६ ।।

**सुधा**—रात में इन्द्रधनुष या धूम्रकेतु का उद्गम किंवा भूकम्प हों तो राष्ट्र ध्वस्त हो जाता है। इसी तरह दिन में उल्कापात ( तारा का टूटना ) किंवा तारा का उदय दीख पड़े तो इसे देशक्षयकारी लक्षण समझें।

### गृहारम्भे शिलान्यासविचारः

### तत्र शिलान्यासे विहितनक्षत्राणि

श्रवणे रोहिणीयुग्मे पुष्याश्विन्युत्तरात्रये ।
रेवत्यां च करे गेहशिलान्यासः प्रशस्यते ।। १६७ ।।

**सुधा**—घरों के शिलान्यास में रोहिणी, मृगशिरा, पुष्य, अश्विनी, तीनों उत्तरा, रेवती, हस्त तथा श्रवण नक्षत्र प्रशस्त हैं।

### गृहारम्भे शिलान्यासविधिः

चतुष्कोणात्मके भूमिपृष्ठे आग्नेयकोणके ।
भूमिं नवग्रहान् नागं सम्पूज्य विधिवत्ततः ।। १६८ ।।
खातं विधाय प्रथमां शिलां तत्र न्यसेत्सुधीः ।
प्रदक्षिणक्रमेणैव स्तम्भानन्यांश्च विन्यसेत् ।। १६९ ।।

**सुधा**—चतुष्कोणात्मक भूमिपृष्ठ ( चौकोर ) में आग्नेय ( पूर्व-दक्षिण ) कोण में पञ्चदेवता विष्णु-पूजानन्तर पृथ्वी, नवग्रह तथा नागदेव की विधिवत् पूजा करके

वही ( आग्नेय कोण में ही ) खात बनाकर प्रथम शिला का न्यास उसमें करें। उसके बाद प्रदक्षिण क्रम से अन्यान्य स्तम्भों को भी प्रतिष्ठित करें।

इस सम्बन्ध में किसी ने कहा है—

'दक्षिणपूर्वे कोणे कृत्वा पूजां शिलां न्यसेत् प्रथमः।
शेषाः प्रदक्षिणेन स्तम्भाश्चैव प्रतिष्ठाप्याः'॥

**वृष्टिविचारः**

पौषे मूलभरण्यन्तं चन्द्रचारेण गर्भति।
आर्द्रादितो विशाखान्तं सूर्यचारेण वर्षति॥ १७०॥

**सुधा**—पूस मास में मूल नक्षत्र से अश्विनी ( दश नक्षत्र ) नक्षत्र तक चन्द्रमा के भोग से मेघ गर्भयुक्त होता है। वही मेघ आर्द्रा से स्वाती तक के नक्षत्रों में सूर्य के सञ्चार से बरसता है।

अर्थात् पूस महीने में मूलादि दश नक्षत्रों में चन्द्रमा के रहने पर मेघच्छायादि जब-जब दीख पड़े तब-तब मेघ गर्भधारण करता है। उन गर्भों का प्रसव स्वाती नक्षत्रपर्यन्त सूर्य के आने पर होता है।

**इति मिथिलाञ्चलस्थमधुबनीमण्डलान्तर्गतनगवासग्रामवास्तव्येन मधुबनीस्थेन मैथिलपण्डितश्रीदेवचन्द्रझाशर्मणा विरचिते व्यावहारिकज्यौतिषसर्वस्वे प्रकीर्णकस्कन्धः समाप्तः।**

**दौर्भाग्यादक्षिदोषान्मे नासौ ग्रन्थो हि विस्तृतः।
सङ्क्षिप्तोऽप्येष नियतं विद्वच्चेतः प्रसादयेत्॥**

---

## ग्रन्थकर्तुः परिचयः

मिथिलाञ्चलवर्त्ति-विश्रुते नगवासाभिधपत्तने हिते ।
जननं मम मैथिलान्वयेऽभवदुद्यद्बुधवृन्दभूषिते ॥ १ ॥
अथ पञ्चमवर्षतः परं शरणं प्राप्य न चारिणो गुरोः ।
निजसद्मगतोऽपि शैशवं सकलं शिक्षणमाप्तवानहम् ॥ २ ॥
तदनुश्रुतकीर्त्तितो नतो गुरुविश्वेवरपादपद्मतः ।
त्रिविधं किल मङ्गलप्रदं निखिलं ज्यौतिषमध्यगीष्यहम् ॥ ३ ॥
पुनरप्यथ तन्निदेशतो गणिताम्भोधितितीर्षया मया ।
अधिकाशि शिवस्य सन्निधौ गुरुवर्यः शिववन्निषेवितः ॥ ४ ॥
गेनालालाभिधसुरगुरुर्यन्मुखाब्जात्तु काश्या-
माद्योपान्तं निखिलगणितज्यौतिषग्रन्थजातम् ।
साहित्यं वै विमलमतिमच्छ्रीमुकुन्दप्रसादात्
श्रावं श्रावं प्रमुदितमना धन्यमात्मानमापम् ॥ ५ ॥
एवं गुरुद्वयकृपावशतो हि काश्या-
माचार्यतामुपगतो विषयद्वयेऽपि ।
अध्यापनं विविधविश्रुतराजकीय-
संस्थासु वै ननु विधाय निवृत्तकृत्यः ॥ ६ ॥
श्रमक्रमवशादेमे द्वयं वर्षत्रयात्मकम् ।
पोष्टाचार्यं च सम्पाद्याध्यापने निरतोऽभवम् ॥ ७ ॥
द्वात्रिंशन्मितवर्षाणि यावदध्यापने रतः ।
ग्रन्थान् कतिपयान् व्याख्याविमर्शैः समपीपदम् ॥ ८ ॥
इदं ज्यौतिषसर्वस्वं व्यवहारविदां मुदे ।
विरचय्याद्य नेत्रान्धतयाऽकिञ्चित् करोऽस्म्यहम् ॥ ९ ॥
सिद्धान्तग्रन्थसन्मर्म विवृतौ यन्मनीषितम् ।
दौर्भाग्यादक्षिदोषान्मे तच्चिराय विलीयताम् ॥ १० ॥
अधि मधुवनि नववासे नगवासे न त्यजन् गृहं नैजम् ।
निवसामि निर्विकारः 'चन्द्रकुटीरे' निजे सपरिवारः ॥ ११ ॥